याति तदनुसारतः श्लाघिष्यामहे;वयं युष्माकं समीपम् अगत्वैव स्वेषां निय- १४
मितं परिमाणं लङ्घामहे इति नहि यतः पूर्व्वं ख्रीष्टस्य सुसंवादं प्रचार-
यितुं युष्माकं सन्निधिं गतवन्तः। तस्माद् अस्माकं परिमाणस्य वहिर्भूते १५
अर्थाद् इतरेषां जनानां श्रमे वयं श्लाघां न कुर्म्मः। किन्तु युष्माकं विश्वासे १६
वृद्धिं गते वयं युष्माभिरतीव विस्तारितं परिमाणं प्राप्य इतरजनानां
श्रमफले कामप्यात्मश्लाघाम् अकृत्वा युष्मद्विदूरस्थानां जनानां समीपे
सुसंवादं प्रचारयितुं शक्ष्यामः, अस्माकम् एषा प्रत्याशा विद्यते। यः १७
श्लाघते स परमेश्वरं श्लाघताम्। यस्माद् यो जनः स्वं प्रशंसति स प्रशंसितो १८
नहि किन्तु प्रभु र्यं प्रशंसति स एव प्रशंसितः।

---

११ एकादशोऽध्यायः।

१ स्ववश्यश्लाघ्यत्वात् पौलस्यात्मश्लाघा १६ विपक्षेभ्यः स्वस्याक्षुद्रत्वकरणं किन्तु ख्रीष्टार्थं श्रमे दुःखे च स्वस्य महत्त्वज्ञापनञ्च।

यूयं ममेमाम् अज्ञानतारूपाम् आत्मश्लाघाम् अल्पां सहध्वम् एष १
ममाभिलाषः, तस्मात् किञ्चिद् युष्माभिः सोढव्यम्। अहम् एकस्मिन् २
स्वामिनि, अर्थात् ख्रीष्टे समर्पयितुं सतीं कन्यामिव युष्मान् वाग्दत्तान्
अकार्षम् एतस्माद् युष्मान् प्रति महाचिन्तया चिन्तावान् अस्म्यहम्।
सर्पस्य प्रतारणया यथा हवा प्रतारिता बभूव तथा चेत् ख्रीष्टं प्रति ३
युष्माकं मनांसि सारल्याद् भ्रंश्येयुः, ममैषा भीति र्जायते। यस्याख्यानं वयं ४
न प्रचारयामः तादृशान्यस्य यीशोरुपाख्यानं यदि कश्चिद् आगत्य
प्राकाशयिष्यत् यद्वा युष्माभिरप्राप्तस्य कस्यचिद् आत्मनः प्राप्तिरभवि-
ष्यत्, अथवा यत् कदापि न गृह्णीथ तादृशस्य सुसंवादस्य प्राप्तिरभविष्यत्
तर्हि तस्य व्यवहरणं सुसहिष्यध्वम्। मुख्यानां प्रेरितानां मध्येऽहं कापि ५
कार्य्ये क्षुद्रो न भवामीति बुध्ये। अहं यद्यपि वक्तृत्वादिगुणेनाश्रेष्ठ- ६
स्तथापि ज्ञानेनाश्रेष्ठो न भवामि किन्तु सर्व्वेषु कार्य्येषु युष्माकं समीपे
वयं प्रकाशिताः स्मः। युष्माकम् उन्नतिहेतो र्नम्रतां स्वीकृत्य विना वेतनम् ७
ईश्वरस्य सुसंवादं युष्माकं समीपे प्रचारयामहे, एतेनाहं किं दोषं कृतवान्?
युष्माकं सेवनार्थम् अन्यसमाजाद् वेतनग्रहणेन तेषां धनम् अपहृतवान्; ८

९ युष्माकं समीपे यदा समुपातिष्ठं तदा कस्यचिद् द्रव्यस्य न्यूनतायां सत्यां
युष्माकं कस्याप्युपरि तस्य भारं न न्यस्तवान् किन्तु माकिदनियादेशाद्
भ्रातर आगत्य प्रयोजनीयद्रव्यं मह्यम् अददन् अपरं मद्धेतोः क्वापि कार्य्ये
१० यूयं यथा भारग्रस्ता न भवथ एतदर्थं चेष्टितवानहं चेष्टिष्ये च। ख्रीष्टस्य
सत्यता यदि मयि तिष्ठति तर्हि निखिलाखायादेशे स्लाघाया एतस्याः कथां
११ कथयितुं कोपि मां निषेद्धुं न शक्ष्यति। कस्मात् कारणात्? किमहं युष्मासु
१२ प्रेम न करोमि? तद् ईश्वरो वेत्ति। किन्तु ये जनाश्छिद्रम् अन्विष्यन्ति
ते यथा छिद्रं न लभन्ते तन्निमित्तम् वयं यत् कुर्म्मस्तत् करिष्यामः
तस्मात् ते यस्मिन् आत्मनः आघन्ते तस्मिन् अस्माकं सदृशा भवन्तु।
१३ अमी भाक्तप्रेरिता मृषाकर्म्मकारिणश्च सर्व्वे ख्रीष्टस्य प्रेरितानां वेशं धार-
१४ यन्ति एतत् किमप्याश्चर्य्यं नहि; यतः शैतानेव यदि तेजस्विदूतानां वेशं
धारयति तर्हि तस्य सेवका यत् धार्म्मिकसेवकानां वेशं धारयन्ति तत्
१५ महद् आश्चर्य्यं नहि; किन्तु स्वस्वकर्म्मानुरूपं तेषां फलं भविष्यति।
१६ अहं भूयः कथयामि तत्र कोपि मां निर्ब्बोधं न विदाङ्करोतु किन्तु
यदि करोति तर्हि निर्ब्बोधवत् मां गृह्णातु तेनाहं किञ्चिदात्मस्लाघां
१७ कर्त्तुं शक्ष्यामि। एतस्या गाढस्लाघायाः कथां यत् कथयामि तत् प्रभो-
१८ राज्ञानुसारतो नहि निर्ब्बोधवत् कथयामि। अनेके जातौ स्लाघां
१९ कुर्व्वन्ति तस्माद् अहमपि करिष्यामि। यूयं बुद्धिमन्त एतत्कारणात्
२० निर्ब्बोधाचरणं सुखेन सोढुं शक्नुथ। वस्तुतः कोपि यदि युष्मान् दासान्
कृत्वा स्थापयति यद्वा युष्माकं सर्व्वस्वं ग्रसति वापहरति वा स्वमुन्नतं
मन्यते वा युष्माकं कपोले चपेटेनाहन्ति तर्हि यूयं सर्व्वाण्येतानि सहध्वे।
२१ वयं दुर्ब्बला एतस्मिन्नपमानेऽहम् इति कथयामि; यस्मिन् कार्य्येऽन्यः
कश्चित् क्षोभरहितो भवति तेनाहम् अधिकं निःक्षोभो भवामि किन्तु
२२ कथामेताम् अज्ञानइव कथयामि। ते किम् इब्रिलोकाः? अहमपीब्री;
तथा ते किम् इस्रायेलिनः? अहमपीस्रायेली; तथा ते किम् इब्राहीमः
२३ सन्तानाः? अहमपीब्राहीमः सन्तानः। अपरं ते किं ख्रीष्टस्य सेवकाः? अहं

तेभ्योऽपि तस्य महासेवकः किन्तु निर्ब्बोधइव वदामि; वस्तुतस्तु तेभ्योऽपि बहु-
परिश्रमे बहुप्रहारे बहुवारं कारावन्धने बहुवारं प्राणनाशसंशये च पतित-
वानहम्। अहं यिहूदीयानां पञ्चकृत्व ऊनचत्वारिंशत् प्रहारान् त्रिर्वेत्राघा- २४
तान् एककृत्वः प्रस्तराघातान् भुक्तवान्। तथा वारत्रयं पोतमज्जने बाधि- २५
तोऽहम् अगाधसलिले दिनमेकं रात्रिमेकाञ्च यापितवान्। इत्थं बहुवारं २६
यात्रायां नदीनां सङ्कटे दस्यूनां सङ्कटे स्वदेशीयानां सङ्कटे विदेशीयानां सङ्कटे
नगरस्य सङ्कटे वनस्य सङ्कटे सरित्पतेः सङ्कटे वेशधारिभ्रातृणां सङ्कटे च;
तथा परिश्रमे क्लेशे च वारम्वारं जागरणे क्षुधायां तृष्णायाञ्च तथा २७
बहुवारं निराहारे शीते नग्नतायाञ्च कालं यापितवान्। अपरञ्च २८
वहिर्भूतेभ्य एभ्यः कार्य्येभ्यो भिन्नः प्रतिदिनं समाजानां चिन्तनभारो
ममोपरि वर्त्तते। कस्मिंश्चिद् दुर्ब्बले जाते नाहं दुर्ब्बलो भवामि? २९
तथा केनचिद् विघ्ने प्राप्ते नाहम् उत्तप्तो भवामि? यदि श्लाघा- ३०
कथा मया कथयितव्या तर्हि स्वदुर्ब्बलतां श्लाघेऽहम्। अपरम् एतस्मिन् ३१
अहं मृषावाक्यं न वदामीति अस्माकं प्रभो र्यीशुख्रीष्टस्य पिता सच्चिदा-
नन्द ईश्वरो जानाति। अपरञ्च दम्मेषकनगरे अरितारराजस्य कार्य्याधिपतिः ३२
सैन्येन प्रहरिणा तन्नगरं रक्षित्वा यदा मां धर्त्तुम् ऐच्छत् तदा नगरस्य ३३
प्राचीरस्थगवाक्षेण पिटकेनावरूढत्वाद् अहं तद्धस्तात् त्रातोऽभवम्।

---

१२ द्वादशोऽध्यायः।

१ स्वर्गीयदर्शनेन तस्य दुःखभोगेन च स्वमत्यप्रेरितत्वस्य प्रमाणदानं १३ लाभार्थं पौलस्य तस्य सपचलोकानाञ्च अमाभावः किन्तु करिन्थिनां मङ्गलार्थं श्रमः।

आत्मनः श्लाघनम् अनुचितं भवति तथापि प्रभोः प्रत्यादेशस्य प्रका- १
शितवाक्यस्य चाख्यानं ब्रवीमि। चतुर्दशभ्योऽधिकवत्सरा गता अहं २
ख्रीष्टमाश्रितं जनमेकं ज्ञातवान्, किन्तु तदा स शरीरेण वर्त्तमानोऽवर्त्त- ३
मानो वेति नाहं जाने जानातीश्वरः। स स्वर्गं नीतः सन् अनिर्व्वचनीयम् ४
अर्थात् मानुषाणां वचनातीतं वाक्यं श्रुतवान्। एतादृशं जनं श्लाघिष्ये नो ५
चेत् मम स्वदुर्ब्बलताभिन्नं किमपि न श्लाघिष्ये। किन्तु यद्यप्यात्मानं श्लाघि- ६

तुम् इच्छामि तथापि सत्यकथाकथनाद् अहं निर्बुद्धीनां मध्ये गणितो न
भविष्यामि किन्तु लोका मां यादृशं पश्यन्ति शृण्वन्ति च तस्मात् श्रेष्ठं यथा
७ मां न जानन्ति तन्निमित्तम् अहं तस्मिन् चान्तः स्थितवान्। अपरम् एतत्
प्रकाशितवाक्यानाम् उत्कृष्टतया यथापरिमितम् अभिमानं न करोमि
तद्धेतो र्ममापरिमिताभिमानानुत्पत्तये विघ्नकारिणः शैताना दूतस्वरूप-
८ एकेन कण्टकेन मम शरीरं वेधितुम् अदीयत। अतएव तस्मान्मोचनार्थं
९ प्रभोः समीपे वारत्रयं प्रार्थितवान्। ततः स मह्यम् अकथयत् त्वयि ममा-
नुग्रहः प्रभूतो भविष्यति दुर्ब्बलतायां मम शक्तिः सम्पूर्णतया प्रकाशिष्यते
तस्मान् मया ख्रीष्टस्य शक्तिः प्रकाशिष्यते इतःकारणात् सानन्दं निज-
१० दुर्ब्बलतायाम् आत्मानं श्लाघिष्ये। वस्तुतः ख्रीष्टहेतो र्दुर्ब्बलतानिन्दा
दरिद्रताविपक्षताकष्टादिषु लब्धेष्वपि सन्तुष्यामि यतः स्वयं दुर्ब्बलोपि
११ सबलो भवामि। स्वयम् आत्मश्लाघनाद् अहं निर्ब्बोधइवाभवं किन्तु तद्
युष्माकमेव दोषात्, वस्तुतो मम प्रशंसनं युष्माकमेवोचितम् आसीत् यस्माद्
अहम् अगण्यानां मध्यीय एकोपि प्रधानप्रेरितेभ्यः केनापि गुणेन न्यूनो न
१२ भवामि। सर्व्वथा धैर्य्यावलम्बनाश्चर्य्यक्रियाशक्तिरद्भुतलक्षणैः प्रेरितानां
चिह्नानि युष्माकं मध्ये मया प्राकाशिषत।

१३ मम पालनस्य कोपि भारो युष्माकमुपरि न मया न्यस्त, इममेकम्
अंशं विनान्येभ्यः समाजेभ्यः केनांशेन यूयं न्यूनाःस्थ?मम तं दोषं क्षमध्वम्।
१४ पश्यत तृतीयवारं युष्माकं समीपं गन्तुम् उद्यतोऽस्मि तत्रापि मम पालनस्य
भारं युष्मासु न न्यसिष्यामि यतो युष्माकं सम्पत्तिं नेहित्वा केवलं युष्मान्
ईहे पितामात्रर्थं धनसञ्चयः सन्तानानाम् अकर्त्तव्यः किन्तु सन्तानार्थं
१५ पितृभ्यां धनं सञ्चयनीयम्। अपरञ्च युष्मासु मया बहुस्नेहे कृतेपि यदि
यूयं मयि स्नेहस्याल्पतां कुरुथ तथापि युष्माकं प्राणहेतो र्व्ययितुं प्राणानपि
१६ व्ययितुम् उद्यतोस्मि। यद् भवेत् युष्मान् किञ्चिदपि भारग्रस्तान्नाकार्षं।
१७ किमहं धूर्त्तः सन् छलेन युष्मान् वञ्चितवान्? तर्हि युष्माकं समीपं यान्
१८ प्रेषितवान् तेषां केनापि किं मम कोपि लाभो जातः? अहं तीतं विनीय

तेन सार्द्धं भ्रातरमेकं प्रेषितवान्; भद्रं, स तीतोपि किं युष्मत्तः किमप्यर्थं
लब्धवान्? वयम् एकरूपम् एकेन पदचिह्नेन च किं नागमाम? अपरमपि १९
युष्माकं समीपे वयं दोषक्षालनकथां कथयाम इति किं बुध्यध्वे?
हे प्रियभ्रातरो युष्माकं निष्ठार्थं वयं सर्व्वकर्म्माणि कुर्म्मः, ईश्वरस्य
समक्षं ख्रीष्टेन कथामेतां कथयामः। अपरं मयि समुपस्थिते चेदहं २०
युष्मान् मनोभिमतान् न पश्यामि तथा युष्माकं मनोभि र्यथाभिलष्यते
चेत् तादृशं मां न पश्यथ वस्तुतस्तु चेद् युष्माकं मध्ये द्वन्द्वम् ईर्ष्या क्रोधो
विवादः परापवादः कर्णेजपता तर्ज्जनं कलहश्चैते भवन्ति, तथा पुनरपि २१
युष्माकं समीपे मयि समुपस्थिते चेद् ईश्वरो मां नमयति तथा ये जनाः
स्वकृतेषु अशुचिकर्म्मवेश्यागमनकामाभिलाषेषु किञ्चिदपि पश्चात्तापं
खेदञ्च नाकुर्व्वन् तेषां बहुलोकानां निमित्तं चेन्मया विलपितव्यम्
इत्यस्मादहं बिभेमि।

---

१३ त्रयोदशोऽध्यायः।

१ पापिनः प्रति पौलस्य शासनवाक्यं समाजीयलोकेषु स्वस्वपरीक्षां कर्त्तुं विनयश्च।

एतत्तृतीयवारं युष्माकं समीपं गच्छामि द्वयोस्त्रयाणां वा साक्षिणां १
मुखात् सर्व्वाः कथाः निश्चिता भविष्यन्ति। एकवारम् अकथयं तथा २
विद्यमान इव पुनरपि कथयामि ये जनाः पूर्व्वं पापम् अकार्षुस्तेभ्यस्तद-
न्येभ्यश्चाधुना लिखामि यदि पुनरपि युष्माकं समीपं गच्छेयं तर्हि पुन र्न
क्षमिष्ये। ख्रीष्टो मया कथां कथयति इत्यस्य प्रमाणं चेष्टध्वे; स युष्मान् ३
प्रति दुर्ब्बलो न भवति किन्तु युष्माकं मध्ये सबलो भवति। यद्यपि दुर्ब्बल- ४
तया क्रुशे हतोऽभवत् तथापीश्वरस्य शक्त्या सजीवः सन्नास्ते; अपरं तदा-
श्रिता वयं दुर्ब्बलाअपि युष्मान् प्रतीश्वरस्य शक्त्या तेन सार्द्धं सजीवा
भविष्यामः। यूयं ख्रीष्टस्य धर्म्मे स्थ नवेति परीक्षध्वं स्वानपि परीक्षध्वं यूयं ५
किं निजान् न जानीथ; अपरञ्च युष्मास्वग्राह्येषु न सत्सु यीशुख्रीष्टो
नितान्तं युष्माकम् अन्तरे यद् अस्ति तत् किं न जानीथ? किन्तु वयं ६
अग्राह्या न भवाम इति यत् ज्ञातुं शक्ष्यथ तत्र मे प्रत्याशा जायते। यूयं ७

किमपि पापं यन्नाचरेतति ईश्वरस्य समीपे प्रार्थयेऽहं तेन वयं प्रामाणि-
कानां मध्ये गणिता इति नहि किन्तु वयम् अप्रामाणिकानां मध्ये गणिता
८ अपि यूयं सत्कर्म्म कुरुतेति मम प्रार्थना। यस्माद् वयं सत्यताया:
सपक्षाः सन्तः कर्म्म कर्त्तुं शक्नुमः किन्तु सत्यताया विपक्षा भूत्वा किमपि
९ कर्त्तुं न शक्नुमः। वयम् असमर्था: स्म किन्तु यूयं यदि समर्था भवथ तर्हि
सोऽस्माकं महाह्लादः फलतो यूयं यत् सिद्धा भवथ तदस्माकं प्रार्थना।
१० विनाशनिमित्तं नहि किन्तु निष्ठानिमित्तं प्रभु र्मह्यं यत् सामर्थ्यं दत्तवान्
चेद् उपस्थितिकाले तत् सामर्थ्यं प्रकाश्य गाढशासनं करोमि, एतदर्थम्
११ इदानीम् अनुपस्थाय युष्मान् प्रति कथा एता लिखामि। हे भ्रातरः शेषे
वदामि युष्माकं मङ्गलं भूयात् यूयं शान्तियुक्ता एकमनसो निर्व्विरोधा
भूत्वा सिद्धा भवथ तेन प्रेम शान्तिश्च ददाति य ईश्वरः स युष्माभिः सह
१२ निवत्स्यति। यूयं पवित्रचुम्बनेन परस्परं नमस्कुरुत; पवित्रलोकाः सर्व्वे
१३ युष्मान् नमन्ति। प्रभो र्यीशुख्रीष्टस्यानुग्रह ईश्वरस्य प्रेम पवित्रस्यात्मनः
साहाय्यं युष्माकं सर्व्वान् प्रति भूयात्। इति।

---

## गालातिनः प्रति पौलस्य प्रेरितस्य पत्रम्।

१ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ६ गालातिलोकानां ख्रीष्टधर्म्मत्यागात् पौलस्याश्चर्य्यज्ञानं तदन्य-
धर्म्मे दोषारोपणं ११ एतस्मिन् धर्म्मे प्रेरितत्वपदे च पौलस्य नियुक्तत्वस्याख्यानञ्च।

१ मनुष्येभ्यो नहि मनुष्यैरपि नहि किन्तु यीशुख्रीष्टेन तं श्मशानाद्
२ उत्थापयिता पित्रा ईश्वरेण च प्रेरितः पौलोऽहं मया सहवर्त्तिनो भ्रात-
३ रश्च वयं गालातिसमाजान् प्रति पत्रं लिखामः। पित्रीश्वरोऽस्माकं प्रभु-
४ र्यीशुख्रीष्टश्च युष्मभ्यम् अनुग्रहं शान्तिञ्च प्रदेयात्। अस्माकं तातेश्वर-

स्वेच्छानुसाराद् एतस्माद् अशुभसंसाराद् अस्मान् रक्षितुं योऽस्माकं ५
पापहेतोः स्वान् प्राणान् अददात् तस्य सर्व्वदा धन्यवादो भवतु। इति।

योऽस्मान् आह्वय ख्रीष्टानुग्रहस्याश्रयं दत्तवान् तस्य सुसंवादं ६
विहाय यूयम् अन्यसुसंवादे मनांसि निधत्थ तत्राहं विस्मयम् अमन्ये।
सोऽन्यसुसंवादः सुसंवादो नहि किन्तु युष्मान् दुःखिनः कर्त्तुं ख्रीष्टीयसुसं- ७
वादस्य विपर्य्ययं कर्त्तुञ्च चेष्टमानाः कियन्तो लोकाः सन्ति। वयं युष्माकं ८
सन्निधौ यं सुसंवादं प्राचारयाम तद्विपरीतं कञ्चिद् अन्यं सुसंवादं यद्यस्माकं
स्वर्गीयदूतानां वा कश्चित् प्रचारयति तर्हि स शप्तो भवतु पूर्व्वं यद्वद् अक-
थयाम, इदानीमपि तद्वद् अहं कथयामि, अर्थाद् यूयं यं सुसंवादम् अग्र- ९
हीष्ट तद्विपरीतम् अन्यं कञ्चन सुसंवादं कश्चिद् यदि युष्माकं समक्षं प्रचार-
यति तर्हि स शप्तो भवतु। अहम् ईश्वरं मानुषं वा कञ्चिद् अनुरुध्य किम् १०
एतां कथां कथयामि? मानुषं नानुरुणध्मि यस्मात् तस्मिन्मया कृतेऽहं
ख्रीष्टस्य सेवको भवितुं न शक्नोमि।

हे भ्रातरो मया यः सुसंवादः प्रचारितः स मानुषमतानुसारो नहीति ११
युष्मान् ज्ञापयामि। अहं कस्माच्चिन् मनुष्यात् तन्न गृहीतवान् शिक्षित- १२
वान् न च केवलं यीशुख्रीष्टेन प्रकाशितवाक्यात् तं शिक्षितवान्।
अपरं यिहूदिनां मतं गृहीत्वा पूर्व्वं यादृशम् आचरम् अर्थाद् येन प्रकारेण १३
ईश्वरस्य समाजं प्रति बहूदौरात्म्यं कृत्वा तस्य नाशम् अकरवं तदवश्यं श्रुतं
युष्माभिः। अपरञ्च पूर्व्वपुरुषपरम्परागते वाक्ये श्रद्धां भक्तिञ्च विधाय मम १४
समवयस्का यावन्त आसन् तेभ्यः सर्व्वेभ्योऽहं यिहूदीयधर्म्मे तत्पर आसम्।
किन्तु मम जन्मारभ्य य ईश्वरो मां पृथक् कृत्वा स्थापितवान् अवशेषतोऽपि १५
स एवानुगृह्य मामाहूय भिन्नदेशीयलोकानां समीपे तदीयाख्यानं प्रकाश- १६
यितुं निजपुत्रस्य तत्त्वं मम समक्षं प्राकाशयत्; ततोऽहं मानुषैः सार्द्धं न १७
मन्त्रयित्वा पूर्व्वनियुक्तै र्यिरूशालमस्थैः प्रेरितैः सहालापं कर्त्तुम् अगत्वा
तत्क्षणाद् आरव्देशं गतवान् पश्चात् तस्मात् पुनरपि दम्मेषक्नगरं
परावृत्य गतवान्। इत्थं वर्षत्रये व्यतीते पितरं साक्षात् कर्त्तुं यिरूशालम- १८

१६ नगरं गत्वा पञ्चदश दिनानि तेन सार्द्धम् अवसम्। किन्तु प्रभो र्भ्रातरं
२० याकुवं विना प्रेरितानां कमपि नापश्यम्। एतानि यानि वाक्यान्यलिखं
२१ पश्यत, ईश्वरो जानाति तेषां वाक्यैकमपि न मिथ्या। ततः परं सुरियां
२२ किलिकियाञ्च देशौ गतवान्। किन्तु तदानीं यिहूदिदेशस्थैः ख्रीष्टाश्रितैः
२३ समाजीयलोकैः सह मम साक्षात् परिचयो नासीत्। यो जनः पूर्व्वं
अस्मान् प्रति दौरात्म्यं कृत्वा धर्म्मनाशम् अकरोत् स इदानीं तं धर्म्मं प्रचार-
२४ यति केवलं वाक्यमिदं श्रुतम्। तस्मात् ते मयीश्वरस्य धन्यवादम् अकुर्व्वन्।

---

## २ द्वितीयोऽध्यायः।

१ पौलस्य यिरूशालमगमनं तस्य कारणनिर्णयः ११ ख्रीष्टधर्म्मस्य विरुद्धाचरणात् पितरस्य दोषित्वकरणञ्च।

१ अनन्तरं चतुर्दशसु वत्सरेषु गतेषु तीतं सङ्गिनं कृत्वाहं बर्णब्बा-
२ सार्द्धं यिरूशालमनगरं पुनरगच्छम्। अपरम् ईश्वरस्य प्रत्यादेशाद्
गत्वा भिन्नदेशिनां समीपे सुसंवादं यत् प्राचारयं तत् तन्निवासिनां
सन्निधौ न्यवेदयं किन्तु चेन्मम गता भाविनी च चेष्टा विफला भवति
३ इतिहेतो र्ये मान्यास्तेषां समीपे गुप्तम् न्यवेदयं। अपरञ्च यद्यप्यस्मान्
अधीनीकृत्य स्थापनाशयेन ख्रीष्टेन यीशुनास्माभिः प्राप्तं यत् सामर्थ्यं
४ तदनुसन्धातुं कियन्तो भाक्तभ्रातरः समाजं प्राविशन्, तथापि मम
५ सङ्गी यूनानीयो यस्तीतस्तस्य त्वक्छेदः करणीयो नाभवत्। किन्तु
युष्माकं निकटे यो वास्तविकः सुसंवादो मया प्राचार्य्यत तस्यान्यथा न
भवति तत्कारणाद् क्षणमात्रं तेषाम् अधीनत्वं नाहं स्वीकृतवान्।
६ अपरे ये कियन्तो मान्यलोका आसन् ते मुख्या अमुख्या वा तेन मम
किमपि न भवति यत ईश्वरः कस्यापि मानुषस्य पक्षपातं न करोति ते
७ मुख्याः पुरुषा मां किमपि नवीनं नाज्ञापयन्; किन्तु त्वक्छेदिनां समीपे
सुसंवादप्रचारणभारः पितरि यथा न्यस्तः, तथैवात्वक्छेदिनां समीपे
८ सुसंवादस्य प्रचारणभारो मयि न्यस्तः, इति दृष्टवान्, यस्मात् त्वक्छेदि-

लोकानां सन्निधौ प्रेरितत्वकर्म्म कर्त्तुं यः पितराय सामर्थ्यं दत्तवान्
तथैवात्वक्छेदिनां सन्निधौ प्रेरितत्वकर्म्म कर्त्तुं स तादृशं सामर्थ्यं मह्यं
दत्तवान्। विशेषतो वयं यथा भिन्नदेशिनां समीपं यामः, ते च यथा ९
त्वक्छेदिनां समीपं यान्ति तदर्थं स्तम्भस्वरूपा मान्या ये याकुब् कैफा
योहन् चैते मह्यं दत्तं योऽनुग्रहस्तं ज्ञात्वा मह्यं बर्णब्बै च सहायरूपं
दक्षिणहस्तं दत्त्वा विसृष्टवन्तः। अपरञ्च दरिद्रलोकेभ्यो दाने मनो निधत्त १०
अस्माकं निकटे केवलमेतत् प्रार्थितवान् अहमपि तत्रोद्योगं कृतवान्।
अपरञ्च पितरे आन्तियखियानगरम् आगते दोषित्वात् समक्षं ११
तम् अभर्त्सयम्। यतः, स पूर्व्वम् अन्यदेशिभिः सह भोजनं व्यव- १२
हरणञ्च कृतवान् किन्तु याकुबः समीपात् कतिपयजनेष्वागतेषु त्वक्छे-
दिभ्यो भयात् तत् परित्यज्य पृथग् भूतवान्। ततोऽपरे यिहूदिनोऽपि १३
तथैव वञ्चितुम् आरभन्त तस्माद् बर्णब्बा अपि तया वञ्चनया वञ्चितो-
ऽभवत्। किन्तु ते सुसंवादमतानुसारेण वास्तविकम् आचारं नाकुर्व्वन् १४
इति विलोक्याहं सर्व्वेषां समक्षं पितरायैतां कथाम् अकथयम् त्वं स्वयं
यिहूदी भूत्वा यदि यिहूदिनां मतविरुद्धम् अन्यदेशिनां मतम् आच-
रसि तर्हि भिन्नदेशिनो लोकान् यिहूदिनामिव व्यवहर्त्तुं कुतः प्रवर्त्त-
यसि? व्यवस्थापालनेन मनुष्यः पुण्यवत्त्वेन गणितो भवितुं न शक्नोति केवल- १५
यीशुख्रीष्टे विश्वसनेन भवितुं शक्नोति ; यिहूदावंशजाता वयम् अन्यदेशिन १६
इव पापिनो न भवाम इति विज्ञाय ख्रीष्टे विश्वसनेन पुण्यवन्तो भवितुं
व्यवस्थायाः कस्मिंश्चित् कर्म्मणि प्रत्याशाम् अकृत्वा यीशुख्रीष्टे विश्वासं
कुर्म्मः ; यतो व्यवस्थापालनेन कोपि प्राणी पुण्यवत्त्वेन गणितो भवितुं न
शक्ष्यति। किन्तु ख्रीष्टे विश्वसनेन पुण्यवत्त्वेन गणिता भवितुं चेष्टित्वा यदि १७
पापयुक्ता भवामस्तर्हि किं ख्रीष्टः पापस्य सेवकः? इत्थं न भवतु। अपरम् १८
अहं यद् अभनजं यदि तत् पुनर्निर्म्मामि तर्हि स्वीयदोषं स्वयमेव
निश्चिनोमि। अहम् ईश्वरस्य समीपे सजीवो भवितुं व्यवस्थायाः सन्निधौ १९
मृतो भवामि। ख्रीष्टेन सार्द्धं क्रुशे विद्धोऽभवं योहं तथापि जीवन् २०

अस्मि सोऽहं न भवामि किन्तु ख्रीष्टो मदन्त र्जीवन् आस्ते यो मयि प्रेम
कृतवान् मन्निमित्तं प्राणत्यागञ्च कृतवान् तादृशो य ईश्वरस्य पुत्रः, अहं
२१ विग्रहवान् सन् केवले तस्मिन् विश्वासं कृत्वा कालक्षेपं करोमि। तस्माद्
अहम् ईश्वरस्यानुग्रहं विफलं न करोमि यस्माद् व्यवस्थाया यदि पुण्यम्
अभविष्यत् तर्हि ख्रीष्टस्य मरणे किमपि प्रयोजनं नाभविष्यत्।

---

३ तृतीयोऽध्यायः।

१ ख्रीष्टं परित्यज्य व्यवस्थया परित्राणचेष्टनाद् गाल्मातिलोकान् प्रति पौलस्य भर्त्सनं व्यवस्थया नहि किन्तु ख्रीष्टस्य पुण्येन वयं पुण्यवन्तो भवितुं शक्नुम इत्यस्य दृढप्रमाणदानञ्च।

१ हे अज्ञाना गालातिलोका युष्माकं मध्ये ख्रीष्टो हत इव
युष्माकं समक्षं प्रकाशितः; अतएव यूयं यत् सत्यधर्म्मं न पालयथ
२ को युष्मान् ईदृशान् मुग्धान् अकरोत्? अहं केवलां कथामेकां
युष्मान् प्रष्टुमिच्छामि यूयम् किं व्यवस्थायाः केनापि कर्म्मणा वा
३ विश्वासजनकेन श्रवणेन आत्मानं प्राप्ताः? यूयं किम् ईदृग् अबोधा यद्
४ आत्मीयेन धर्म्मेण साधनम् आरभ्य शारीरिकेन धर्म्मेण सिद्धा भवथ? तर्हि
५ यूयं किम् मुधा क्लेशानितान् भुंग्ध्वे, इत्थं किं भवति। युष्माकं समक्षम्
आश्चर्य्यं कर्म्म कृत्वा यो युष्मभ्यम् आत्मानं प्रादात् स किं व्यवस्थापालनेन
६ वा विश्वासजनकेन श्रवणेन तत् कृतवान्? यद्वद् ईश्वरे विश्वसनाद् इब्रा-
७ हीम् पुण्यवत्त्वेन गणितो बभूव; तद्वद् ये विश्वसन्ति तएव इब्राहीमः
८ सन्ताना इति निश्चितं जानीत। अन्यदेशिनो विश्वासेन पुण्यवत्त्वेन
गणिता भविष्यन्तीश्वरः पूर्व्वम् एतद् विदित्वा, त्वया सर्व्वदेशिनो
लोका आशीर्व्वादं प्राप्स्यन्ति, इति धर्म्मपुस्तके लिखितवचनेन पूर्व्वम्
९ इब्राहीमं सुसंवादं श्रावयामास। इतिकारणाद् वदामि ये जना विश्व-
१० सन्ति ते विश्वासीब्राहीम् इव आशिषं प्राप्नुवन्ति। किन्तु ये जना व्यवस्थायाः
कर्म्माधीनास्ते शप्ता भवन्ति यथा लिपिरास्ते, 'व्यवस्थाग्रन्थे लिखितानि
११ कर्म्माणि तानि यः सर्व्वं जनो निश्छिद्रं न करोति स शप्तो भवति'। अपरं

पुण्यवान् जनो विश्वासेनैव जीविष्यति, अतएव व्यवस्थासम्बन्धीयकर्म्मणा
कोपि जन ईश्वरस्य समीपे पुण्यवत्त्वेन गणितो भवितुं न शक्नोतीति
व्यक्तीभवति। तर्हि व्यवस्थया सह विश्वासस्य सम्बन्धो नास्ति किन्तु यो १२
'जनस्ताः सर्व्वा आज्ञाः पालयति स तेनैव जीविष्यति।' अपरम् इब्राहीम १३
आशी र्यथा यीशुख्रीष्टेन भिन्नदेशिलोकेषु भवति यथा च वयं विश्वासेन
प्रतिज्ञातम् आत्मस्वरूपं फलं प्राप्नुमः ; इत्याशयेन ख्रीष्टोऽस्मन्निमित्तं स्वयं १४
शप्तो भूत्वा व्यवस्थायाः शापाद् अस्मान् अमोचयत् ; यथा लिखितम् आस्ते,
'यो जनो वृक्षे समवलम्बितः स्यात् स शप्तः।' हे भ्रातृगण मानुषाणां १५
रीत्यनुसारेणाहं कथयामि, कश्चन मानवो यदि कञ्चन नियमं निश्चि-
नोति तर्हि तदन्यः कोपि तस्य न्यूनातिरिक्तं कर्त्तुं न शक्नोति। इब्राहीमं १६
तत्सन्तानञ्च प्रति सर्व्वाः प्रतिज्ञा उक्ता आसन् तत्र सन्तानशब्दं बहु-
वचनान्तम् अकृत्वा तव सन्तान इत्येकवचनान्तं शास्त्रे लिखितवान् तस्माद्
असौ सन्तानशब्दः ख्रीष्टे वर्त्तते। अतएवाहं वदामि ख्रीष्टसम्बन्धीयो १७
यो नियम ईश्वरेण निरणायि ततः परं त्रिंशदधिकचतुःशतवत्सरेषु
गतेषु स्थापिता या व्यवस्था सा तन्नियमाद् अन्यप्रकारं कृत्वेश्वरीय-
प्रतिज्ञां विफलां कर्त्तुं न शक्नोति। यतो व्यवस्थया यद्यधिकारं प्राप्नोति १८
तर्हि प्रतिज्ञया न प्राप्नोति किन्त्वीश्वरस्य प्रतिज्ञया स इब्राहीमे प्रादीयत।
तर्हि व्यवस्थया किं फलं? फलमेतत् यस्मै सन्तानायेश्वरः प्रतिज्ञां १९
चकार तस्यावतारो यावन्न भवति तावत् पापनिवारणार्थं दूतै र्मध्य-
स्थस्य हस्ते सा व्यवस्था स्थापिता। एकस्य पक्षस्य मध्यस्थो न भवति २०
किन्त्वीश्वरः केवल एकपक्ष आस्ते। तर्हि व्यवस्था किम् ईश्वरस्य प्रतिज्ञाया २१
विरुद्धा? तथा न भवतु, यतः परमायु र्दातुं व्यवस्थाया यदि शक्तिरस्थास्यत्
तर्हि व्यवस्थयावश्यं पुण्यम् अलप्स्यत। किन्तु यीशुख्रीष्टं प्रति प्रत्ययविषयक- २२
प्रतिज्ञायाः फलं यथा सर्व्वान् विश्वासिनः प्रति भवति तदर्थं धर्म्मशास्त्रे
सर्व्वान् पापाधीनत्वेन गणयति। अतएव भाविनि समये विश्वासस्य यः २३
पन्थाः प्रकाशिष्यते तत्पथप्रकाशदिनं यावद् वयं व्यवस्थाया अधीनीभूत्वा

२४ बद्धा आस्महि। इत्थं वयं यथा विश्वासेन पुण्यवत्त्वेन गणिता भवाम एत-
न्निमित्तं ख्रीष्टस्य समीपं नेतुं सा व्यवस्थास्माकं शिक्षकगुरुस्वरूपासीत्।
२५ किन्त्वधुना ख्रीष्टधर्म्मस्योपस्थितत्वाद् वयं शिक्षकस्य वशीभूताः सन्तः पुन
२६ र्न तिष्ठामः। ख्रीष्टे यीशौ विश्वसनात् सर्व्वे यूयम् ईश्वरस्य सन्ताना अभूत।
२७ यूयं यावन्तो लोकाः ख्रीष्टस्य नाम्ना जले मज्जिता अभवत सर्व्वे
२८ ख्रीष्टरूपं वासः पर्य्यदधात। अतो यूयं यिहूदिनो भवेत वा यूनानिनो
भवेत तथा मुक्ता भवेत वा वन्दयो भवेत तथा योषा भवेत वा पुरुषा
भवेत युष्माकं परस्परं कोपि विशेषो नास्ति; यीशुख्रीष्टस्याश्रितीभूत-
२९ त्वाद् यूयं सर्व्वे एकएव। अपरं यदि यूयं ख्रीष्टमाश्रिता भवथ तर्हि सुतराम्
इब्राहीमः सन्तानाः, तथा प्रतिज्ञायाः फलस्याधिकारिणः।

---

## ४ चतुर्थोऽध्यायः।

१ उत्तराधिकारिण इव व्यवस्थाया अधीनीभूतत्वं ६ पुत्रत्वाद् दासस्य कर्म्माकरणं १२ गालातिलोकानां पूर्व्वीयप्रेम्नः प्रशंसनं सङ्गलचेष्टाकरणं २१ व्यवस्थासुसंवादयो र्भेदनिर्णयश्च।

१ अहं वदामि यावद् अधिकारी बहुवयस्को न भवति तावत् सर्व्वेषाम्
२ अधिपतिः सन्नपि पित्रा निरूपितकालपर्य्यन्तं गुरूणाम् अधिपतीनाञ्च
३ निघ्नीभूय तिष्ठति, तस्य दासस्य च कोऽपि भेदो नास्ति। तद्वद् वयमपि
४ बाल्यकाले सांसारिक्याः शिक्षाया अधीना आस्म। अनन्तरं काले सम्पूर्णे
सति व्यवस्थाया अधीनत्वाद् अस्मान् मोचयितुमस्माभ्यं दत्तकपुत्रत्वपदं
५ दातुञ्चेश्वरः स्वपुत्रं स्त्रिया जातं व्यवस्थाया अधीनञ्च कृत्वा प्रेषितवान्।
६ यूयम् सन्ताना अभवत तत्कारणाद् येनात्मना वयम् ईश्वरं पितः
पितरिति सम्बोधनं कृत्वा समाह्वयामः, तस्य पुत्रस्य तमात्मानम् ईश्वरो
७ युष्माकम् अन्तःकरणेषु निधत्तवान्। तस्माद् दासत्वान् मुक्ताः सन्तोऽद्या-
रभ्य सन्ताना भवथ तथा सन्तानत्वात् ख्रीष्टेन ईश्वरस्याधि-
८ कारिणो भवथ। अपरञ्च पूर्व्वम् ईश्वरस्यानधिगमाद् ये वास्तविका
९ ईश्वरा न भवन्ति तेषां सेवायां यूयं नियुक्ता आध्वं; किन्त्विदानीं
यूयम् ईश्वरं पर्य्यचैष्ट वरम् ईश्वरेण पर्य्यचायिढ्वम् अतएव तां निष्फलां

तुच्छाश्च शिक्षाम् अनुष्ठाय पुनर्दासत्वे स्थातुं कुतो वाञ्छथ? यूयं विशेषं १०
विशेषं दिनं मासं तिथिं सम्वत्सरादिञ्च मन्यध्वे। तस्माद् युष्मदर्थं यः ११
परिश्रमो मयाकारि स विफलो भवेत् ममेदं साध्वसं जायते।

हे भ्रातरो युष्मान् विनये ऽहं यादृग् यूयमपि तादृशा भवत यस्माद् १२
यूयं यादृशाः स्थ, अहमपि तादृश आसं; यूयं केनापि मम क्षतिं
नाकुरुत। अहं प्रथमं कलेवरस्य दौर्ब्बल्येन युष्माकं सन्निधौ सुसंवादं यत् १३
प्राचारयं तद् यूयं जानीथ। अपरं परीक्षार्थं मम शारीरिकं क्लेशं दृष्ट्वापि १४
हेयं विज्ञाय मां तुच्छं नाकार्ष्ट किन्तु ईश्वरदूतमिव यीशुख्रीष्ट-
मिव वा माम् अगृह्लीत। अतस्तदा युष्माकं कीदृश आनन्द आसीत्? युष्मासु १५
प्रमाणम् एतादृशं दातुम् शक्नोमि यद् युष्माकं यदि दातव्यम्
अभविष्यत् तर्हि स्वेषां नयनान्युत्पाट्य मह्यं दातुम् उद्यता आध्वम्।
तर्हि सत्यकथाकथनाद् अहं किं युष्माक रिपुरभवं? ते युष्मासु श्रद्धां १६
कुर्व्वन्तीति सत्यं किन्तु सम्यङ् नहि यतो यूयं यत् तेषु श्रद्धां १७
कुरुथ तदाशयेन तेऽस्मान् दूरीकर्त्तुं प्रयासं कुर्व्वन्ति। किन्तूत्तमेषु सदा १८
श्रद्धा करणीया युष्माकं समीपे यदाहम् उपतिष्ठामि तदैव नहि सर्व्वदैव
करणीया। हे मम बालका यावद् युष्माकमन्तः ख्रीष्टो मूर्त्तिमान् न १९
भवति तावत् पुनः प्रसववेदनेव मम वेदना जायते। अहं युष्माकं सन्नि- २०
धावुपस्थायान्यप्रकारां कथां कथयितुं कामये यतो युष्मासु सन्देह्मि।

यूयं व्यवस्थाया अधीनीभवितुं यदिच्छथ तत्राहं युष्मान् पृच्छामि २१
यूयं किं व्यवस्थाया वचनानि नाधिगच्छथ? यस्माद् एतादृशं लिखितम् २२
आस्ते, इब्राहीमो द्वौ पुत्रावासाते तयोरेको दासीगर्ब्भजः इतरः स्वभा-
र्य्यागर्ब्भजः। तयो र्दासीगर्ब्भजः पुत्रो व्यवहारानुसारतो जज्ञे, भार्य्या- २३
गर्ब्भजस्तु पुत्रः प्रतिज्ञानुसारतो जज्ञे। इदमाख्यानं दृष्टान्तस्वरूपमभवत् २४
अर्थात् ते द्वे योषे ईश्वरस्य नियमद्वयस्वरूपे अभवताम्; तयो र्मध्ये
सीनीपर्व्वताद् दत्तो यो दासत्वजनको नियमस्तस्य दृष्टान्तस्य स्थानं
सा हाजिरानामिका दासी जाता। यस्माद् हाजिराशब्देन आरविदेशस्थः २५

सीनीपर्व्वतो बोध्यते, अपरं स्वबालैः सार्द्धमिदानीं दासत्वे विद्यमानं
२६ यिरूशालम् नगरञ्च बोध्यते। किन्तु स्वर्गस्था यिरूशालम्नगरी सर्व्वेषाम्
२७ अस्माकं जननीस्वरूपा। यादृशं लिखितम् आस्ते

'अप्रसूते च हे बन्ध्ये त्वं समानन्दिता भव।
अज्ञातसूतिकष्टे च त्वमानन्दध्वनिं कुरु।
यतएव सनाथायां योषितस्तनयादपि।
अनाथाया भविष्यन्ति बहुसंख्याः सुताः किल।'

२८ अतएव हे भ्रातृगण यद्वद् ईश्वरस्य प्रतिज्ञायाः फलस्वरूप इस्हाक्
२९ उदपादि वयमपि तद्वद् उदपन्नमहि। किन्तु तदा यो व्यवहारानुसारात्
३० जज्ञे स यथा आत्मनो जातं ताडयामास तथाधुनापि; किन्तु
धर्म्मग्रन्थे लिखितमेतत् 'त्वं दासीं तस्याः पुत्रञ्च बहिष्कुरु यतो दासीपुत्रो
३१ भार्य्यायाः पुत्रेण सार्द्धं समभागी भवितुं न शक्नोति'। हे भ्रातरो वयं
तस्या दास्या वंशा न भूत्वा व्यूढाया वंशा अभवाम।

---

५ पञ्चमाध्यायः।

१ त्वक्छेदेन त्राणचेष्टानिषेधः परस्परं प्रेम कर्त्तुं विनयः १९ इन्द्रियकर्म्मात्मकर्म्मणोः कथनञ्च।

१ ख्रीष्टोऽस्मान् यस्मिन् मुक्तिपदे नियुक्तवान् तत्र स्थिरा भवत दासत्व-
२ रूपयुगेन पुन र्बद्धा न भवत। पश्यताहं पौलो युष्मान् निश्चितं कथयामि
यदि त्वक्छेदिनो भवथ तर्हि ख्रीष्टेन युष्माकं किमपि फलं न भविष्यति।
३ अपरं त्वक्छेदकर्म्मावलम्बिनां सर्व्वेषां निकटे ऽहम् इदं प्रमाणं ददामि
४ ते सर्व्वव्यवस्थापालनार्थम् ऋणिनो भवन्ति। युष्माकं यः कश्चिज् जनो
व्यवस्थया पुण्यवत्त्वेन गणितो भवितुं चेष्टते तेन सह ख्रीष्टस्य कोपि
५ सम्बन्धो न तिष्ठति सोऽनुग्रहात् पतितः। वयं प्रत्ययेन प्राणात्मना
६ पुण्यरूपफलं प्रत्याशामहे। ख्रीष्टस्य धर्म्मे त्वक्छेदोऽत्वक्छेदो वा द्वयोरपि
७ फलं नास्ति किन्तु प्रेमजनको यो विश्वासः सएव सारः। यूयं सत्ये पथि
स्वच्छन्दं गतवन्तः किन्तु येन तस्मिन् पथि पुन र्न गच्छथ युष्माकम्

एतादृशी बाधा केनाजन्यत? यो जनो युष्मान् आहूतवान् तस्माद् ८
एतादृशी मति र्न जाता। अल्पः किण्वः कृत्स्नं गोधूमचूर्णं किण्वमयं ९
करोति। मम यादृशी मतिः प्रभोरनुग्रहेण युष्माकमपि तादृशी मति १०
र्भविष्यति ममैतादृशो विश्वासो जायते; किन्तु यो जनो युष्मान् विडम्ब-
यति यः कोपि भवेत् स स्वकर्म्मणः फलं प्राप्स्यति। हे भ्रातरो यद्यहं ११
त्वक्छेदविधिं प्रचारयामि तर्हि कुतस्ताडनां भुञ्जे तस्मिन् कृते क्रुशेन
बाधाऽलोप्स्यत। ये जना युष्माकं मनांस्यस्थिराणि कुर्व्वन्ति ते वहिष्कृता १२
भवन्तु, इत्यहं कामये। हे भ्रातरो यूयं मुक्त्यर्थं आहूता अभवत किन्तु १३
तां मुक्तिम् उपलक्ष्य इन्द्रियाभिलाषं न पूरयत वरं प्रेम्ना एको जनोऽन्यं
सेवतां। यस्मात् परस्मिन् स्ववत् प्रेम कुरु, इत्येकस्याम् आज्ञायां पालि- १४
तायां सत्यां सर्व्वव्यवस्थायाः पालनं सिद्ध्यति। किन्तु यदि परस्परं १५
हिंसित्वा युष्माकं एको जन इतरं ग्रसति तर्हि चेत् परस्परं विनश्येत
इत्यत्र सावधाना भवत।

यूयं पारमार्थिकम् आचारम् आचरत मयेदम् उच्यते तथा कृते सांसा- १६
रिकम् अभिलाषं नपूरयिष्यथ। पारमार्थिको भावः सांसारिकेण भावेन १७
विरुध्यते; अनयोरुभयोः परस्परविरोधाद् यूयं स्वेच्छया कर्म्म कर्त्तुं न
शक्नुथ। किन्तु यदि पारमार्थिकभावेन चालिता भवथ तर्हि व्यवस्थाया १८
अधीना न भवथ। अपरं परदारगमनं वेश्यागमनम् अशुचिकर्म्म कामा- १९
भिलाषः प्रतिमापूजा कुहकं शत्रुत्वं विवादो द्वेषः क्रोधः कलहः पार्थक्यं
विधर्म्माचरणम् ईर्षा बधो मत्तत्वं लम्पटत्वम् इत्यादीनि सर्व्वाणि नितान्तम् २०
इन्द्रियाणां कर्म्माणि। एषु कर्म्मसु यद्वत् पूर्व्वं युष्मभ्यम् अकथयं तद्वद् इदा- २१
नीमपि कथयाम्येतद् ये जना एतादृशानि कर्म्माणि कुर्व्वन्ति ते कदाचन
ईश्वरस्य राज्येऽधिकारं प्राप्तुं न शक्ष्यन्ति। किन्तु प्रेम आनन्दः शान्तिः २२
धैर्य्यावलम्बनं नम्रत्वं भद्रत्वं विश्वास्यत्वं मृदुत्वं परिमितभोजित्वम् इत्या- २३
दीनि यान्यात्मनः फलानि तेषां विरुद्धा कापि व्यवस्था नहि। अपरञ्च २४
ये जनाः ख्रीष्टमाश्रितास्ते कामाभिलाषेण साकम् इन्द्रियाणि क्रुशे

२५ चिह्नानि हतवन्तः। अस्माद् अभिमानिनो न भूत्वा परस्परं क्रोधद्वेषा-
२६ दीनि न कृत्वा वयं पारमार्थिकभावेन सजीवाः सन्तः पारमार्थिकम्
आचारम् आचराम।

---

६ षष्ठोऽध्यायः।

१ दोषिभ्रातु र्दोषस्यावश्यवहनीयत्वं ६ उपदेष्ट्रे दानं सत्कर्म्मणि प्रवृत्तिकथनं ११ त्वक्छेदं न मानित्वा ख्रीष्टे पौलस्य विश्वासः श्लाघनञ्च।

१ हे भ्रातरो युष्माकं कश्चिद् यदि केनचिद् दोषेण ग्रस्तो भवति तर्हि
पारमार्थिका यूयमपि चेत् तादृक्परीक्षायां पतथेति विमृश्य नम्र-
२ तया पुनस्तं धर्म्ममार्गे स्थिरीकुरुत। तथा परस्परम् एक इतरस्य भारान्
३ वहन् ख्रीष्टस्य निदेशं पालयत। यदि कश्चन क्षुद्रः सन् स्वं महान्तं
४ मन्यते तर्हि स स्वभ्रमं स्वयमेव जनयति। अत एकैको जनः स्वस्वकर्म्म
स्वयमेव परीक्षतां तथाकृते सोऽन्यस्माद् आनन्दम् अप्राप्य स्वतः प्राप्स्यति
५ यत एकैको जनः स्वीयभारं वक्ष्यति।

६ यो जनः सुसंवादस्य लब्धोपदेशः स स्वीयसर्व्वोत्तमद्रव्याणां किञ्चित्
७ किञ्चिद् उपदेशकाय ददातु। युष्माभि र्न भ्रमितव्यम् ईश्वरो न वञ्चनीयः
८ यतो मानवो यद् वपति स तदेव कर्त्तिष्यति। कलेवरम् उद्दिश्य यो
वपति स कलेवराद् विनाशरूपं शस्यं लप्स्यते किन्तु य आत्मानम् उद्दिश्य
९ वपति स आत्मनोऽनन्तायूरूपं शस्यं लप्स्यते। अतो वयं सत्कर्म्म कर्त्तुम्
अश्रान्ता भवाम क्लान्तेषु न सत्सु समुचितसमये तदीयं फलं प्राप्स्यामः।
१० एतदर्थं सुयोगं प्राप्य सर्व्वलोकानां विशेषतो विश्वासिनां परिवाराणां
मङ्गलं करवाम।

११ हे भ्रातरः स्वहस्तेन युष्मान् प्रति कियद्वृहत्पत्रं लिखितवानहं तद् यूयं
१२ पश्यथ। क्रुशे हतख्रीष्टार्थं यथा ताडनां न प्राप्नुवन्ति केवलं तदर्थं यावन्तो
लोकाः संसारे यशसे स्पृहयन्ति ते युष्माकं त्वक्छेदं कारयितुं बहु यतन्ते।
१३ ये त्वक्छेदं गृह्णन्ति ते व्यवस्थां न पालयन्ति किन्तु ते यथा युष्माकं त्वक्-
१४ छेदं श्लाघन्ते तदर्थं तत् कर्त्तुं युष्मान् प्रवर्त्तयन्ति। किन्तु येनाहं संसारस्य

पक्षे हतः संसारोऽपि मम पक्षे हत एतादृशोऽस्माकं यीशुख्रीष्टस्य यः क्रुश-
स्तदन्यत्र कुत्रापि मम श्लाघा न भवतु। ख्रीष्टस्य यीशो धर्म्मे त्वक्छेदात्वक- १५
छेदयोरुभयोरपि कोऽपि प्रभेदो नास्ति किन्तु या नवीना सृष्टिः सैव
सारा। अपरे यावन्तो लोका एतन्नियमानुसारेण व्यवहरन्ति तेभ्य ईश्वरस्य १६
सर्व्वेभ्य इस्रायेल्लोकेभ्यश्च दया शान्तिश्च प्रदीयतां। अद्यारभ्य कोऽपि १७
मह्यं कष्टं न ददातु यस्मादहं निजशरीरे प्रभोर्यीशुख्रीष्टस्य चिह्नं
धारये। हे भ्रातरोऽस्माकं प्रभो र्यीशुख्रीष्टस्यानुग्रहो युष्माकम् आत्मनि १८
स्थेयात्। इति।

---

# इफिषिणः प्रति पौलस्य प्रेरितस्य पत्रम्।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं २ विश्वासिलोकानाम् ईश्वरमनोनीतत्वकथनं १५ एनां निगूढां कथां बोद्धुं ईश्वर ज्ञानार्थम् प्रार्थनञ्च।

ईश्वराभिमतानुसारात् पौलनामा यीशुख्रीष्टस्य प्रेरितः ख्रीष्टयीशौ १
विश्वासिन इफिषीयपवित्रलोकान् प्रति पत्रं लिखति। अस्माकं तात २
ईश्वरः प्रभुर्यीशुख्रीष्टश्च युष्माकम् अनुग्रहं शान्तिञ्च क्रियात्।

यो जगतः सृष्टेः पूर्व्वं स्वस्य साक्षात् प्रेम्ना पवित्रान् निष्कलङ्कांश्च ३
कर्त्तुम् अस्मान् मनोनीतान् अकरोत्, तथा ख्रीष्टेन सर्व्वैः पारमार्थि- ४
काशीर्भिः स्वर्गीयस्थानेऽस्मान् प्राप्तमङ्गलान् अकरोत्, एतादृशो योऽस्माकं
प्रभुयीशुख्रीष्टस्य पितेश्वरः स धन्यः। असावीश्वरः स्वीयगौरवान्विता- ५
नुग्रहस्य गुणान् प्रकाशयितुम् इच्छाया उत्तमतानुसारेण यीशुख्रीष्टेन ६
स्वसमीपे दत्तकपुत्त्रत्वपदं प्राप्तुम् अस्मान् न्यरूपयत्; अपरं स्वीयं तदसीमा- ७
नुग्रहं प्रकाश्य यस्य रक्तपातेन वयं पापै र्मुक्तास्तस्य प्रियपुत्त्रस्यानुरो-
धाद् अस्मानपि तेनानुग्रहेण प्रियान् अज्ञासीत्; अपरञ्च तेनानुग्रहेण ८

९ अस्मान् प्रति अपरिमितरूपेण सर्व्वथा ज्ञानं विवेकञ्च प्राकाशयत्। तथा
परहितैषी सन् स्वेच्छातो चेतसि यां निगूढां कथां पूर्व्वं निरचिनोत्
१० अर्थात् कालस्य पूर्णयुगांशे सति स्वर्गस्थान् पृथिवीस्थान् वा सर्व्वान्
११ ख्रीष्टे संग्रहीष्यति, इदं निगूढं वाक्यम् अस्मान् अज्ञापयत्। अपरं यः
स्वेच्छया मन्त्रयित्वा निजाभिमतानुसारात् सर्व्वाणि कर्म्माणि साधयति
१२ स पूर्व्वं यथा न्यरूपयत् तदनुसारेण पूर्व्वं ख्रीष्टे प्रत्याशाम् अकार्ष्म ये वयं
तैरस्माभि र्यथा तस्य महिमा प्रकाशते तदर्थम् अमुना ख्रीष्टेन वयं अधि-
१३ कारपदं प्राप्ताः। अपरञ्च परित्राणजनिकायाः सत्यकथायाः, अर्थात् सुसं-
वादश्रवणाद् यूयमपि तं प्रति प्रत्याशां कृत्वा प्रतिश्रुतवाक्यस्य फलस्वरूपो
१४ यः पवित्रआत्मा तेन मुद्राङ्किता अभवत। अपरं निजमहिम्नः प्रकाशार्थं
यान् अक्रीणात् यद्दिनपर्य्यन्तं ते क्रीतलोका मुक्तिपदं प्राप्य नाधिकारं
प्राप्नुवन्ति तद्दिनपर्य्यन्तं स पवित्र आत्मा पूर्व्वदत्तवेतनस्वरूप आस्ते।
१५ प्रभौ यीशौ युष्माकं यो विश्वासः तथा पवित्रलोकेषु युष्माकं यत्
१६ प्रेम तद्वृत्तान्तं श्रुत्वा युष्मान् स्मृत्वा सर्व्वदाहम् ईश्वरस्य धन्यवादं कृत्वा
१७ प्रार्थनामेतां करोमि। अस्माकं प्रभो र्यीशुख्रीष्टस्य तेजोमयस्तात ईश्वर-
१८ स्तं स्वीकर्त्तुं ज्ञानं प्रकाशितवाक्यबोधनशक्तिञ्च युष्मभ्यं देयात्; अपरञ्च
युष्माकं ज्ञानरूपचक्षुःषु प्रसन्नेषु सत्सु तस्याह्वानाद् या प्रत्याशा सा का, तथा
निजाधिकारे पवित्रलोकार्थं गौरवस्वरूपो यो विभवः स कः, एतज्
१९ ज्ञापयतु। अपरम् ईश्वरो यदा श्मशानात् ख्रीष्टम् उत्थाप्य सर्व्वाधिपतित्व-
पदं पराक्रमः सामर्थ्यं राजत्वञ्चेहलोके परलोके च यानि पदानि
२० सन्ति, तेषां सर्व्वेषां उपरि तम् अधिपतिं कृत्वा स्वर्गे निजदक्षिणपार्श्वे तस्मै
२१ स्थानं दत्तवान्; अपरं सर्व्वत्र सर्व्वाङ्गपूर्णकारिणः पूरयिता यः समाज-
रूपविग्रहस्तदर्थं मस्तकरूपं श्रेष्ठपदं तस्मै दत्त्वा सर्व्वान् तस्य पदनतान्
२२ अकरोत्, तस्मिन् समये यं प्रबलपराक्रमं ख्रीष्टे प्राकाशयत् तदनुसा-
२३ रतो विश्वासिनोऽस्मान् प्रति तस्य यो महापराक्रमः स कः इति च
युष्मान् ज्ञापयतु।

## २ द्वितीयोऽध्यायः।

१ विश्वासिलोकः स्वभावतः कीदृक् अनुग्रहेण च कीदृक् तदाख्यानं ११ ख्रीष्टेन तेषां परित्राणं १९ तेषां पवित्रमन्दिरस्वरूपत्वञ्च।

आकाशमण्डले प्राप्तपराक्रमो राजा, अर्थाद् अनाज्ञाग्राहिलोकानाम् १
उपरि अधिपतित्वं करोति य आत्मा, तस्येच्छानुसारत एतज्जगत्संसा- २
रस्य रीत्यनुसारतः पूर्व्वं कालक्षेपणकरणात् पापैराज्ञालङ्घनैश्च मृतान्
युष्मान् ईश्वरः सजीवान् कृतवान्। तैरनाज्ञाग्राहिलोकैः सार्द्धम् ३
आचरन्तो व्यवहरन्तश्च वयं सर्व्वे पूर्व्वम् इन्द्रियाणां वशीभूय शारीरिकीं
मानसिकीञ्च कामनां साधयित्वा स्वभावतो ऽन्यलोकाइव दण्डपात्राणि
जाताः। किन्त्वित्थं पापै र्मृतेष्वपि दयासागरो य ईश्वरः सोऽस्मान् ४
प्रति यत् महाप्रेम प्राकाशयत् तेन प्रेम्ना ख्रीष्टेनास्मानपि सजीवान् कृतवान् ५
अतएवानुग्रहेण यूयं परित्राणं प्राप्ताः। इत्थं ख्रीष्टयीशुनास्मान् प्रति ६
तस्यानुग्रहेण योऽसीमो गुणः स यथा भविष्यद्युगे प्रकाशितो भविष्यतीति- ७
निमित्तम् अस्मान् एकदा समुत्थाप्य ख्रीष्टयीशुना स्वर्गीये स्थाने वासं
कारितवान्। अतोऽनुग्रहं प्राप्य विश्वासेन परित्राणं प्राप्ताः, तद् युष्माकं ८
निजगुणेन जातम् इति नहि किन्तु तद् ईश्वरस्य दानम्। तथा कस्यापि ९
दर्पो यथा न जायते तदर्थं तत् कस्यापि कर्म्मणः फलेनापि नाभवत्। यतो १०
वयं तेन सृष्टवस्तूनि तथा येन सदाचारेण कालं यापयितुम् ईश्वरोऽस्मान्
पूर्व्वं न्यरूपयत् तत्साधनार्थं ख्रीष्टयीशुना सृष्टा अभवाम।

पूर्व्वं यूयं पूर्व्वपुरुषानुक्रमाद् अन्यदेशिनो भूत्वा हस्तकृतत्वक्छेदिभिर- ११
त्वक्छेदित्वेन गणिता आध्वं; तदैव ख्रीष्टम् अज्ञात्वा, इस्रायेल्लोका-
नाम् अधिकारस्य नाधिकारिण आध्वं; तथा प्रतिश्रुतवाक्यरूपस्य नियमस्य १२
वहि र्भूत्वा संसारे प्रत्याशारहिता ईश्वरविहीनाश्च सन्तः कालम् अयाप-
यत, एतानि सर्व्वाणि यूयं स्मरत। किन्तु ख्रीष्टयीशुम् आश्रिता यूयं १३
पूर्व्वं दूरस्थिता अपि ख्रीष्टस्य रक्तपातगुणेनाधुना समीपस्था अभवत।
यस्मात् स्वशरीरेण यिहूदिनां भिन्नदेशिनाञ्च वैरिताम् अर्थात् विधि- १४
व्यवस्थाशास्त्रेषु या आज्ञा तां लुप्त्वा, उभाभ्याम् एकं नवीनजनं कृत्वा १५

निजक्रुशेन वैरितां नाशयित्वा सन्धिं स्थिरीकृत्येश्वरेण सार्द्धम् द्वयम्
१६ अमेलयत्। इत्थं भिन्नताकारिमध्यवर्त्तिप्राचीरं भंक्त्वा द्वयम् एकी-
१७ कृत्यास्माकं मेलनकारकोऽभवत्। इत्थं सति ये समीपस्था यूयञ्च दूरस्था
१८ उभयेषां समीपम् आगत्य मेलनवार्त्ताम् प्राचारयत्। अतएव तस्मो
वयम् उभये लोका एकेनात्मना पितुः समीपं गन्तुं मार्गम् अलभामहि।
१९ अत इदानीं यूयं भिन्नजातयो विदेशिनश्च न भूत्वा पवित्रलोकानां
२० समीपवासिन ईश्वरस्य परिजनाश्चाभवत। अपरं यस्य निचयनस्य कोणे
प्रधानप्रस्तरस्वरूपो यीशुख्रीष्टः भित्तिमूलस्वरूपाः प्रेरिता भविष्यद्वा-
२१ दिनश्च तस्य निचयनस्य भित्तिमूलोपरि यूयं निचिता अभवत। तथा
तस्य कोणस्य प्रस्तरे सर्व्वनिचयनं संयुक्तं सद् ईश्वरस्य पवित्रमन्दिर-
२२ स्वरूपं भूत्वा उत्तिष्ठति। तस्मिन्नपि यूयम् ईश्वरस्य वासस्थानार्थम्
आत्मना निचिता जाताः।

---

३ तृतीयोऽध्यायः।

१ अन्यदेशिनः प्रति सुसंवादं प्रचारयितुं पौलस्य नियोजनं तेषां कृते तस्य प्रार्थना
२० ईश्वरस्य धन्यवदनञ्च।

१ भिन्नदेशिलोकानां युष्माकं निमित्तम् अहं पौलो यीशुख्रीष्टस्य
२ वन्दि विद्ये। युष्माकं कृते मयि समर्पितं यद् ईश्वरदत्तानुग्रहपदं तद्
३ युष्माभिः श्रुतं भवेत्। अपरं कथम् ईश्वरः प्रकाशितवाक्येन तां निगूढां
४ कथां मां ज्ञापितवान् इति पूर्व्वं संक्षेपेण पत्रे लिखितवानहं। तस्मिन्
पत्रे पठिते सति ख्रीष्टस्य निगूढे तत्त्वे मम ज्ञानं कियद् अस्तीति ज्ञातुं
५ शक्ष्यथ। अपरञ्च सुसंवादेन भिन्नदेशिनः समानाधिकारिण एकशरी-
रस्थाः ख्रीष्टसम्बन्धीयाया ईश्वरस्य प्रतिज्ञायाः समानांशिनश्च भविष्यन्ति,
६ एषा कथाधुना यथात्मना पवित्रप्रेरितानां भविष्यद्वादिनाञ्च निकटे
७ प्रकाशितास्ते पूर्व्वकालीनलोकानां निकटे तथा प्रकाशिता नासीत्। अपरं
मह्यं कर्म्मसाधकपराक्रमानुसारतो दत्तम् ईश्वरस्यानुग्रहरूपं यद्दानं
८ तेनाहं तस्य सुसंवादस्य प्रचारकोऽभवम्। वस्तुतस्तु सर्व्वेषां पवित्राणां

मध्ये सर्व्वेभ्यः क्षुद्रेण मया भिन्नदेशीयलोकानां सन्निधौ बोधागम्यः
ख्रीष्टस्य गुणरूपो निधि र्यथा प्रकाशितो भवतीति निमित्तं यीशुख्रीष्टेन ९
सर्व्ववस्तूनां स्रष्टुरीश्वरस्य समीपे जगत आरम्भतो यन्निगूढं वाक्यं गुप्त-
मासीत् तस्य समानाधिकारित्वं मानुषमात्रो यथा पश्यति ; यत्र च विश्वस्य १०
वयं दृढभक्त्या समीपमीश्वरस्य यातुम् अक्षोभं प्राप्नुम एतादृशो योऽस्माकं ११
प्रभु र्यीशुख्रीष्टस्तेन युगस्य यो नियमः स्थिरीकृतः, तस्मिन् ईश्वरस्य
नानाविधज्ञानं यथा स्वर्गस्थप्रधानपराक्रमिणो दूता धर्म्मसमाजेना- १२
वगच्छन्ति तदर्थं तदनुग्रहपदं मह्यं दत्तमभूत्। अतएवाहं युष्मान् १३
इति विनीय कथयामि युष्मन्निमित्तम् अस्माकं यः क्लेशभोगस्तत्र यूयं
भग्नाशा मा भवत यतः स युष्माकं गौरवस्वरूपो जातः। एतदर्थं १४
स्वर्गस्था पृथिवीस्था वा सर्व्वे परिवारा यस्य नाम्ना विख्यातास्तादृशो
योऽस्माकं प्रभो र्यीशुख्रीष्टस्य पिता तस्य सन्निधौ जानुनी पात- १५
यित्वा प्रार्थनामेतां करोमि। स निजविभवानुसारतः स्वस्यात्मनो बलेन १६
युष्मान् अन्तरे बलवतः करोतु। तथा विश्वासेन युष्माकम् अन्तःकरणे १७
ख्रीष्टम् अधिष्ठापयतु। तथा प्रेम्ना बद्धमूलान् स्थिरांश्च कृत्वा बुद्धेरतीतं यत् १८
ख्रीष्टस्य प्रेम तस्य प्रेम्नः कियती दीर्घता विस्तीर्णता गभीरता प्रोच्चता च
ताः सर्व्वैः पवित्रलोकैः सार्द्धम् अनुभवितुं युष्मान् बलवतः करोतु। अपरम् १९
ईश्वरः सम्पूर्णतो युष्माकम् अन्तःकरणेषु विराजमानस्तिष्ठतु।

अस्माकम् अन्तःकरणेषु या शक्तिः प्रकाशते तच्छक्त्यनुसारतोऽस्माकं २०
प्रार्थनाया आशायाश्चातिरिक्तं यो दातुं शक्नोति ख्रीष्टयीशुना समा- २१
जस्य मध्ये सर्व्वेषु युगेषु तस्य धन्यवादो भवतु। इति।

---

४ चतुर्थोऽध्यायः।

१ ऐक्यभवनाय मन्त्रणा सर्व्वेषां पारमार्थिकवराणाम् अभिप्रायनिर्णयः १७ दुष्ट-स्वभावं त्यक्तुम् इफिषीयलोकेषु पौलस्य विनयः २५ धर्म्मकर्म्म कर्त्तुं तान् प्रति विनयश्च।

अहं प्रभो र्वन्दि र्युष्मान् प्रति विनयमेतं करोमि यूयं सर्व्वथा नम्रतां १

२ मृदुतां धैर्य्यञ्च प्रकाश्य प्रेम्ना परस्परम् उपकारिणो भूत्वा येनाह्वाने-
३ नाहूता भवथ तदुपयुक्तम् आचारम् आचरत। अपरं प्रेमरूपबन्धनेन
४ आत्मन ऐक्यरक्षायै यत्नं कुरुत। अपरञ्च यद्वत् सर्व्वे यूयम् एकाह्वाने-
५ नाहूताः सन्त एकप्रत्याशिनोऽभवत तद्वद् युष्माकं सर्व्वेषाम् एकं शरीरम्
६ एक आत्मा एकः प्रभुरेको विश्वास एकं मज्जनञ्च तथा सर्व्वोपरिस्थः
७ सर्व्वेषाम् अन्तर्य्यामी युष्माकं मध्यवर्त्ती पितृस्वरूप एक ईश्वर आस्ते। अपरं
ख्रीष्टीयदानस्य परिमाणानुसाराद् अस्माकम् एकैकशो जनेऽनुग्रहः
८ क्रियते। यथा लिखितम् आस्ते,

'ऊर्द्ध्वमारुह्य दासत्वान्मोच्यन्ते वन्दयस्त्वया।
अत्याचारिक्षते दानं त्वं ग्रहीष्यसि वै तथा।'

९ ऊर्द्ध्वम् आरुह्येति वाक्यस्यायमर्थः स पूर्व्वम् अधःस्थितपृथ्वीम् अवतीर्ण-
१० वान्; अपरं योऽवतीर्णवान् सएव सर्व्वेषां पूर्णतां कर्त्तुं सर्व्वोपरिस्थं स्वर्गम्
११ आरोहत्। अपरं विश्वासस्यैक्येन ईश्वरस्य पुत्त्रविषयकज्ञानेन च वयं सर्व्वे
यावत्कालं सम्पूर्णं पुरुषार्थं न प्राप्नुमः, अर्थात् ख्रीष्टस्य सम्पूर्णपरिमाणानु-
१२ सारेण परिमाणं न प्राप्नुमः, तावत्कालपर्य्यन्तं पवित्रलोकान् सिद्धान् कर्त्तुं
१३ प्रचारकर्म्म साधयितुञ्च ख्रीष्टस्य शरीरस्य, अर्थात् समाजस्य निष्ठां कर्त्तुं
कतिपयजनान् प्रेरितान्, कतिपयजनान् भविष्यद्वादिनः, कतिपयजनान्
सुसंवादप्रचारकान्, कतिपयजनान् पालकान्, कतिपयजनान् उपदेशकान्
१४ न्ययुङ्क्त। तस्माद् वयं मानुषाणां चातुर्य्या भ्रान्तिजनकमतस्य धूर्त्ततया
सर्व्वेषोपदेशरूपवायुना च बालकाइव यथा इतस्ततश्चालिता न भवामः;
१५ किन्तु येन सर्व्वेष्वङ्गप्रत्यङ्गेषु योग्यतया युक्तेषु एकैकाङ्गस्योपकारेण
दृढेषु एकैकभागस्य परिमितकर्म्मकरणानुसारेण प्रेम्ना निष्ठां प्राप्तेषु
१६ समस्तशरीरं वर्द्धते तादृशो मस्तकस्वरूपो यः ख्रीष्टस्तस्य प्रेम्नासत्यकथां
कथयित्वा वयं सर्व्वस्मिन् तस्याङ्गस्वरूपाः सन्तो वर्द्धामहे।

१७ प्रभुना युष्मान् प्रतीमम् आदेशं विनयञ्च करोमि भिन्नदेशिनश्चञ्चल-
मतयो भूत्वा यादृशम् आचारं कुर्व्वन्ति यूयं तादृशम् आचारं पुनर्मा

कार्ष्टे। यतस्तेऽज्ञानरूपान्धकारेणान्धीभूताः सन्तो मनसां काठिन्यान्न- १८
रिकाज्ञानताहेतोरीश्वरसेवातः पराङ्मुखाश्चैतन्यशून्याश्च सन्तः काम- १९
स्याभिमतेन लालसां कृत्वा सर्व्वाण्यशुचिकर्म्माणि कर्त्तुं प्रवर्त्तन्ते। यूयम् २०
इत्थं ख्रीष्टस्य धर्म्मं न शिक्षध्वे; किन्तु यीशुना यानि सत्यवाक्यान्युक्तान्या- २१
सन् तानि सर्व्वाणि श्रुत्वा शिक्षिता अभवत। तस्माद् इन्द्रियाणां मोहेन २२
भ्रष्टो यः पुरातनस्वभावः, तस्य वशित्वेन यूयं पूर्व्वम् आचारं कृतवन्तः,
तं स्वभावं परित्यजत, तथा मनसो वृत्त्या नवीनीकृता भवत। अपरञ्च २३
सत्कर्म्मणा सत्यधर्म्मेण च ईश्वरस्य मूर्त्त्यनुसारतः सृष्टो यो नवीनः स्वभा- २४
वस्तं परिगृह्लीत।

हे भ्रातरो यूयं सर्व्वे मिथ्याकथां परित्यज्य समीपवासिभिः सह २५
सत्यमालापं कुरुत यतो वयं परस्परम् अङ्गस्वरूपा भवामः। अपरं क्रुद्धाः २६
सन्तः पापेन लिप्ता मा भवत, तथा सूर्य्ये नास्तं गते कोपं त्यजत। अपरञ्च २७
शैतानो स्थानं मा दात। यो जनोऽचोरयत् सोऽद्यारभ्य पुनश्चौर्य्यं न २८
कुर्य्यात् किन्तु दीनानां दैन्यं दूरयितुं सामर्थ्यप्राप्तये स्वहस्ताभ्यां सत्
कर्म्म कुर्व्वन् परिश्रमं करोतु। अपरं युष्माकं वदनेभ्यः कोपि कदालापो २९
न निर्गच्छेत् किन्तु श्रोतृणां निष्ठायाम् उपकारजनकः सदालापो भवतु।
अपरञ्च ईश्वरस्य येन पवित्रेणात्मना मुक्तिदिनपर्य्यन्तं मुद्राङ्किता अभवत ३०
तस्यासन्तोषजनकं किमपि कर्म्म न कुरुत। तथा कटुवाक्यं कोपो रागः ३१
कलहो निन्दा सर्व्वजिघांसा चैतानि सर्व्वाणि युष्मत्तो दूरीभवन्तु। अपरं ३२
ख्रीष्टस्यानुरोधाद् ईश्वरो युष्मान् यथाक्षमत यूयमपि तथा दयालवः
कोमलान्तःकरणाश्च भूत्वा परस्परं क्षमध्वम्।

---

५ पञ्चमोऽध्यायः।

१ सर्व्वा अशुचिक्रियाः परित्यक्तुं तान् प्रति पौलस्य विनयः १५ सावधानतया आचरितुं तान् प्रति विनयस्य स्त्रीपुरुषयोः कर्त्तव्यकर्म्मकथनस्य।

यूयं प्रियबालका इव ईश्वरस्य पश्चाद्गामिनो भवत। अपरं ख्रीष्टो १
यथास्मासु प्रेम कृत्वा सुगन्धिनैवेद्यबलिस्वरूपो भूत्वा ईश्वरमुद्दिश्य २

अस्मन्निमित्तं स्वम् उदसृजत् यूयमपि प्रेम्णा तादृशम् आचारं कुरुत।
३ किन्तु वेश्यागमनं सर्व्वविधाशौचक्रिया लोभश्चैतेषाम् उच्चारणमपि युष्माकं
४ मध्ये मा भवतु, एतदेव पवित्रलोकानाम् उचितम्। अपरं कुत्सितवाक्यम्
मूढतालापः परिहासश्चैता अनुचितक्रिया न भवन्तु वरम् ईश्वरस्य
५ धन्यवादो भवतु। व्यभिचारी वा लम्पटो वा देवार्च्चकमध्ये गणितो लोभी
वा खीष्टस्य अर्थाद् ईश्वरस्य राज्ये कमप्यधिकारं न प्राप्स्यतीति यूयं
६ जानीथ। अतएव सावधाना भवत, अनर्थकवाक्येन कोऽपि युष्मान्
भ्रान्तिं न जनयतु यतस्तादृगाचारहेतोरनाज्ञाग्राहिणो लोका ईश्वरस्य
७ कोपपात्राणि भवन्ति। यूयं तैः सह भागिनो न भवत। यूयं पूर्व्वम्
८ अन्धकारमया आध्वं किन्त्विदानीं प्रभुना दीप्तिमया भवथ, तस्माद्
९ दीप्तेः सन्ताना इव समाचरत। सर्व्वसुक्रियायां धर्म्मे सत्यकथायाञ्च आत्मनः
१० फलमास्ते। अतएव प्रभोरभिमतकर्म्मणोऽनुष्ठानं कुरुत। अपरम् अन्ध-
कारस्य निष्फलकर्म्मणां सहभागिनो न भवत किन्तु तानि प्रति भर्त्सनं
११ कुरुत। यस्मात् तैः कृतानि यानि गुप्तकर्म्माणि तानि मुखाग्रानयनं
१२ लज्जास्पदम्। तथा दूष्यकर्म्मणो ये दोषास्ते दीप्त्यैव प्रकाश्यन्ते येन प्रका-
१३ श्यन्ते तां दीप्तिं वदन्ति। एतत्कारणाद् उक्तमास्ते, 'हे निद्रित जन त्वं
१४ जागृत् श्मशानाद् उत्तिष्ठ ततः खीष्टस्तुभ्यं दीप्तिं दास्यति'।
१५ काला अशुभास्तस्माद् दिनं सफलं कुरुत, अपरम् अज्ञानिवद् आचरणं
१६ न कृत्वा ज्ञानिवत् सावधानाः सन्त आचरत। यूयम् अबोधवन्न भूत्वा
१७ प्रभोरिष्टकर्म्मणि तत्परा भवत। अपरं यस्माद् दुष्टाचरणं जायते
१८ तादृशेन सुरापानेन मा मत्ता भवत किन्त्वात्मना सम्पूर्णा भवत। तथा
१९ गीतै र्गानैः परमार्थकीर्त्तनैश्च परस्परम् आलापं कृत्वा प्रभुम् उद्दिश्य
२० मनसा सार्द्धं गायत वादयत च। विशेषेणास्माकं प्रभो र्यीशुखीष्टस्य
नाम गृहीत्वा सर्व्वदा सर्व्वार्थम् ईश्वरस्य सन्निधौ कृतज्ञतां स्वीकुरुत।
२१ ईश्वराद् भीताः सन्त एकोऽन्यजनस्य वशीभवत। हे योषितो यूयं यथा
२२ प्रभो र्वशं गतास्तथा निजनिजस्वामिनो वशं गता भवत। यतः समाजस्य

शरीरसम्बन्धेन ख्रीष्टो यथा मस्तकस्वरूपः शरीरत्राता भवति तथा २३
पतिरपि योषितो मस्तकस्वरूपः। अतएव समाजो यद्वत् ख्रीष्टस्य वशीभूत- २४
स्तद्वद् योषितोऽपि सर्व्वकार्य्येषु स्वस्वपतेः वशा भवन्तु। अपरञ्च हे पुरुषा २५
वाक्येन जलमज्जनेन च समाजं पवित्रं कर्त्तुं तथा सर्व्वकलङ्कजरादि-
विहीनं पवित्रं तेजस्विनञ्च तं समाजं निजनिकटउपस्थापयितुञ्च यद्वत् २६
ख्रीष्टः स्वीयप्राणान् दत्त्वा तम्प्रति प्रेम प्राकाशयत् यूयमपि निज- २७
निजजायां प्रति तद्वत् प्रेम कुरुत। अपरञ्च स्वीयं स्वीयं शरीरम् प्रति २८
यादृशं प्रेम जायते स्वस्वभार्य्यां प्रति च तादृशप्रेमकरणं समुचितं भवति
यतो यो जनो भार्य्यायां प्रेम करोति स स्वस्मिन्नेव प्रेम करोति। अपरं २९
निजशरीरं प्रति कोऽपि कदापि द्वेषं न करोति किन्तु प्रभु र्यथा समाजं
तथा निजशरीरं बिभर्त्ति पुष्णाति च। वयञ्च तस्य शरीरस्य मांसास्थ्य- ३०
वयवस्वरूपा भवामः। इतिहेतोः पुमान् निजमातापितृभ्यां पृथग् भूत्वा ३१
स्वभार्य्यायाम् आसक्तो भविष्यति तथा तौ द्वावेकाङ्गौ भविष्यतः। ख्रीष्ट- ३२
समाजयो र्यामिमां कथाम् कथयामि तदतीव निगूढवाक्यम्। अतएव ३३
युष्माकम् एकैको जनः स्वस्वभार्य्यायाम् इत्थम् आत्मनीव प्रेम करोतु तथा
भार्य्यापि स्वामिनं समाद्रियताम्।

---

६ षष्ठोऽध्यायः।

१ बालकानां मातापित्रोश्च कर्त्तव्यकर्म्मकथनं ५ दासानां प्रभूनाञ्च कर्त्तव्यकर्म्मणः कथनं १० ईश्वरीयसज्जायां सज्जीभूतत्वे तान् प्रति पौलस्य विनयः २१ तुखिकस्य प्रेषणं भ्रातृन् प्रति नमस्कारज्ञापनञ्च।

हे बालकाः परमेश्वरस्य वाक्यानुसारतो यूयं पितामात्रोराज्ञाग्राहिणो १
भवत यत एतदुपयुक्तं। 'निजपितामातरौ समाद्रियस्व तस्मिन् कृते २
कल्याणस्य जातत्वात् त्वं देशे दीर्घायु र्भोक्तुं शक्ष्यसि' प्रतिज्ञायुक्तैषा प्रथ- ३
माज्ञा। अपरं हे पितरो यूयं निजापत्यैभ्यो न क्रुध्यत किन्तु प्रभोः ४
शिक्षां शिक्षयित्वा सूपदिश्य च तान् प्रतिपालयत।

हे दासा यूयं ख्रीष्टस्य यथा तथा सभयाः कम्पान्विताश्च भूत्वा ५

६ सरलान्तःकरणैः खीयखीयप्रभूनाम् आज्ञायाहिणो भवत। यतः खाधीनः
पराधीनो वा भवेत् यः कश्चित् किञ्चन सत्कर्म्म करोति स प्रभोरन्तिके
७ तस्य कर्म्मणः फलं प्राप्स्यतीति विज्ञाय मानुषस्य कर्म्मेति न बुद्धा
८ प्रभोः कर्म्मेति बुद्धा खेच्छापूर्व्वकं मानुषसन्तोषार्थं दृष्टिसेवाम् अकृत्वा
स्वान् ख्रीष्टस्य सेवकान् विज्ञाय मनो निधाय ईश्वरस्याभिमतं कर्म्म
९ साधयत। अपरं हे अधिपतयो यः कस्यापि पक्षपातं न करोति स्वर्गे
युष्माकं तादृश एकोऽधिपतिरास्ते, इति विदित्वा स्वान् स्वान् भृत्यान् न
निर्भर्त्स्य यूयमपि तदनुसारेण व्यापारं कुरुत।

१० हे मम भ्रातरः शेषकथैषा यूयं प्रभोरुपरि भारं दत्त्वा तस्य बलेन
११ बलवन्तो भवत। शैतानः खलतां निवारयितुं सामर्थ्यप्राप्तये ईश्वरेण
१२ दत्तसज्जया स्वेषां सुसज्जां कुरुत। यतो वयं केवलरक्तमांसयुक्तै र्जनैः सार्द्धं
युद्धमकृत्वा प्रधानैः पराक्रमिभि र्भूतैः सह संसारसम्बन्धीयान्धकाराधि-
१३ पतिभिः सह आकाशस्थैः पापात्मभिश्च सह संग्रामं कुर्म्मः। अतएव
दुःसमये यथा तेषाम् आक्रमणं निवार्य्य स्थिरीभूय स्थातुं शक्ष्यथ, एत-
१४ दर्थम् ईश्वरेण दत्तया सर्व्वसज्जया सज्जीभवत। वस्तुतस्तु सत्यत्वरूप-
१५ कटिबन्धनेन कटिं बद्धा धर्म्मरूपवर्म्मणा वक्षो बद्धा शान्तिदायिकां सुसं-
१६ वादरूपां पादुकां पदे समर्प्य निश्चलाः सन्तस्तिष्ठत। विशेषतो येन पापा-
त्मनोऽग्निवाणान् निवारयितुं समर्था भवथ तादृशं विश्वासरूपं फलकं
१७ धारयत। अपरं परित्राणरूपं किरीटं शिरसि समारोप्य, ईश्वरस्य
१८ वाक्यरूपम् आत्मनः खड्गं धारयत। अपरं मनो निधाय सर्व्वप्रकारेण
निवेदनेन याच्ञया च सर्व्वदा प्रार्थयध्वं तथा निखिलपवित्रलोकानां
कृते कामनां कृत्वा तस्यां प्रार्थनायां नित्यं प्रवर्त्तमानाः सन्तः चैतन्ययुक्ता
१९ भवत। अपरञ्च सुसंवादप्रचारणात् शृङ्खलेन बद्धो यो दूतोऽहं तेन मया
कथने समारब्धे तस्य सुसंवादस्य निगूढवाक्यं प्रकाशयितुं यथा मह्यम्
२० अक्षोभेन सार्द्धं वक्तृता दीयते, अर्थाद् योग्याक्षोभेन यथा प्रचारयितुं
शक्नोमि, तदर्थं मदर्थं प्रार्थयध्वं।

अपरं मां प्रति यद्यद् अघटत मया च यद्यत् क्रियते तानि सर्व्वाणि २१
तुखिकनामा प्रभो विंश्वास्यः सेवक एकः प्रियो भ्राता युष्मान् ज्ञापयि-
ष्यति। अस्माकं सर्व्ववृत्तान्तं ज्ञापयितुं युष्माकं मनःसु सान्त्वनां कर्त्तुञ्च तं २२
युष्माकं सन्निधिं प्रेरितवान्। तात ईश्वरः प्रभु र्यीशुख्रीष्टश्च सर्व्वेभ्यो २३
भ्रातृभ्यो विश्वासेन सह प्रेम शान्तिञ्च प्रदेयात्। ये केचिद् अकापट्येन २४
प्रभौ यीशुख्रीष्टे प्रेम कुर्व्वन्ति तान् प्रति प्रनुग्रहो भूयात्। इति।

---

# फिलिपिनः प्रति पौलस्य प्रेरितस्य पत्रम्।

## १ प्रथमोध्यायः।

१ मङ्गलाचरणं ७ फिलिपिनां प्रत्ययफलहेतोः पौलस्य धन्यवदनं तेषां कृते तस्य प्रार्थना च १२ ख्रीष्टस्य सुसंवादप्रचारणे तस्य दुःखकथनं २६ सुसंवादस्य विध्यनुसारेणाचरितुं विनयः प्रभुभ्यो भयं न कर्त्तुं तान् प्रति विनयश्च।

पौलतिमथिनामानौ यीशुख्रीष्टस्य द्वौ सेवकौ फिलिपिनां समाज- १
स्थान् ख्रीष्टयीशोः सर्व्वान् पवित्रलोकान् प्रति, धर्म्माध्यक्षान् सहकारिणश्च
प्रति पत्रं लिखतः। अस्माकं तात ईश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मभ्यम् २
अनुग्रहशान्ती देयास्ताम्।

अहं युष्मान् सन्ततं स्मृत्वा, ईश्वरं धन्यं वदामि। आ प्रथमाद् अद्य ३
यावद् यूयं सुसंवादस्य भागिनोऽभवत, इति विज्ञायाहं सानन्दः सन् ४
सर्व्वासु निजप्रार्थनासु युष्माकं सर्व्वेषां कृते ईश्वरस्य समीपे निरन्तरं
निवेदयामि। यतो यो युष्माकम् अन्तर उत्तमं कर्म्म साधयितुं प्रावर्त्तत ५
स यीशुख्रीष्टस्यागमनदिनपर्य्यन्तं तस्मात् कर्म्मणो न निवर्त्तिष्यते ममात्र
दृढविश्वास आस्ते। अपरं युष्मासु ममेत्थं बोधनम् उचितं भवति यतो ६
यूयं सर्व्वेऽहमिवानुग्रहं प्राप्ताः, इति कारणाद् अहं स्वबन्धने प्रत्युत्तरे
सुसंवादस्य दृढप्रमाणदाने च युष्मान् अन्तःकरणे स्थापयामि। अपरञ्च ७

योशुख्रीष्टो यादृशं प्रेम प्राकाशयत् तादृशेन प्रेम्ना युष्मान् प्रति कति प्रेम
८ करोमि तत्रेश्वर एव मम साक्षी विद्यते। अपरञ्च यथा ज्ञानेन विवेचनया
१० च उत्तरोत्तरं युष्माकं प्रेम वर्द्धते, यथा ख्रीष्टस्य विचारदिनपर्य्यन्तं सरला
११ निर्व्विघ्नाः सन्तो यूयम् उत्तमं कर्म्म विविंग्ध्वे यथा च योशुख्रीष्टेन
यादृशेनेश्वरस्य महिमा प्रशंसा च प्रकाश्येते तादृशेन सत्कर्म्मफलेन
सम्पूर्णफलवन्तो भवथ तदर्थं प्रार्थयेऽहम्।
१२ हे भ्रातरो मां प्रति यद् यद् घटितं तेन सुसंवादस्य कर्म्म
निष्फलं न भूत्वा पुनः सफलं जातम् एतद् युष्मान् ज्ञापयितुं कामये
१३ ऽहम्। अपरम् अहं ख्रीष्टकारणाद् बद्धोऽभवम् एषा कथा राज-
१४ धान्याम् अन्यस्थाने च सर्व्वत्र प्रकाशिताऽभवत्; तत् केवलं नहि प्रभु-
सम्बन्धीया अनेके भ्रातरो मम बन्धनं विलोक्य दृढं विश्वस्य निर्भयं
१५ निःक्षोभञ्च कथां प्रचारयन्ति। एषां मध्ये केचिद् द्वेषिणः प्रतिकूलाश्च
१६ भूत्वा प्रचारयन्ति केचिच्च सानुकूल्या भूत्वा प्रचारयन्ति; किन्तु ये जना
विरोधेन वक्ररूपेण च ख्रीष्टस्य कथां प्रचारयन्ति ते मम बन्धनेन पुनः
१७ क्लेशवृद्धिं भविष्यतीति विज्ञाय तत् कुर्व्वन्ति। किन्तु ये जनाः प्रेम्ना
प्रचारयन्ति, अहं सुसंवादस्य स्थापनाय नियुक्तोऽभवम्, इति ज्ञात्वा ते
१८ तत् कुर्व्वन्ति। तर्हि किं? सद्भावेन असद्भावेन वा येन केनचित् प्रकारेण
भवेत् ख्रीष्टस्य कथा प्रचारिता भवति तत्राहम् आह्लादितो भवामि
१९ भविष्यामि च। यतो युष्माकं प्रार्थनया योशुख्रीष्टस्यात्मनश्चोपका-
२० रेण ममोद्धारो भविष्यतीति जानेऽहम्। तत्र केनापि प्रकारेण
लज्जितो न भविष्यामि किन्तु सर्व्वथा निःक्षोभेन यद्वत् पूर्व्वकालतम्
तद्वद् जीवने भवेद् वा मरणे भवेद् इदानीमपि मम शरीरे
२१ ख्रीष्टस्य महिमा प्रकाशिष्यते इत्यपेक्ष्य नितान्तं प्रत्याशां करोमि। अहं
यदि जीवन् तिष्ठामि तत् ख्रीष्टस्य कृते, अपरं यदि म्रिये तन् मम
२२ लाभस्य कृते। अपरञ्च यदि जीवन् तिष्ठामि तत्र मम परिश्रमस्य फलम्
आस्ते; किन्तु द्वयोरनयो र्मध्ये किं मनोनीतं करिष्यामि तस्य निश्चयं

कर्त्तुं न शक्नोमि। उभाभ्याम् अहं सङ्कुचितोस्मि ख्रीष्टेन सह वसनम् २३
अत्युत्तमं ज्ञात्वा देहं परित्यक्तुम् इच्छाम्यहम्। किन्तु युष्माकं हितार्थं २४
देहेऽवस्थिति र्भद्रा, इतिदृढबोधाद् युष्माकं निष्ठां विश्वासजातमानन्दञ्च
वर्द्धयितुम्, अहं जीवन् स्थित्वा युष्माभिः सर्व्वैः सहितः कियत्कालं
स्थास्यामि, तदहं जानामि। इत्थं सति मम प्रत्यागमनेन यीशुख्रीष्टे २५
युष्माकम् आनन्दवृद्धि र्भविष्यति।

यूयं केवलं ख्रीष्टस्य सुसंवादस्य योग्यरूपं व्यापारं कुरुत, तथा सति २६
अहं यदि युष्मान् साक्षात् कर्त्तुम् उपतिष्ठामि नोपतिष्ठामि वा तर्हि यूयम् २७
यत् परस्परम् एकस्मिन् आत्मनि स्थिरा भवथ, एकमनसा च सुसं-
वादस्य धर्म्मार्थं यतध्वे, तां वार्त्तां श्रोष्यामि। अपरं यूयं विपक्षाणां विपक्ष- २८
तायाः केनापि प्रकारेण मा भैष्ट यतः सा निर्भयता तेषां सन्निधौ
युष्माकं विनाशलक्षणं किन्त्वीश्वरेण युष्माकं समीपे परित्राणस्य
लक्षणं। अपरञ्च पूर्व्वं मां यादृग् युद्धन्तम् अपश्यत, इदानीमपि यादृग् २९
युद्धस्य कथां शृणुथ, यूयमपि तादृग् युद्धथ तेन ख्रीष्टे विश्वसितुं ३०
तत् केवलं नहि किन्तु तत्कारणाद् दुःखमपि भोक्तुञ्च युष्मान् प्रत्य-
नुग्रहः क्रियते।

---

२ द्वितीयोऽध्यायः।

१ परस्परं प्रेम कर्त्तुं विनयः ५ ख्रीष्टस्य दृष्टान्तेन नम्रीभवितुं विनयः १२ अन्य-लोकानां तेषाञ्च फलार्थं धर्म्ममाचरितुं विनयः १७ तेषां सेवां कर्त्तुं पौलस्य वाञ्छा तेषां निकटं तिमथिम् इपाफ्रदितञ्च प्रेरयितुम् ईहा च।

यदि ख्रीष्टेन किमपि सान्त्वनं प्रेम आनन्द आत्मनः सहायता स्नेहो १
दया च तिष्ठति तर्हि यूयम् एकचित्ता एकप्रेम्नः प्रेमिण एकचेष्टा एक- २
मन्त्रणाश्च भूत्वा ममानन्दं सम्पूर्णं कुरुत। यूयं विरोधस्य दर्पस्य वा ३
किमपि कर्म्म मा कुरुत किन्तु नम्रस्वभावा भूत्वा स्वेभ्य अन्यलोकान्
उत्तमान् जानीत। अपरं यूयम् एकैको जनः केवलम् आत्मीय गुणेषु ४
नहि किन्तु परकीयगुणेष्वपि मनोनिधानं कुरुत।

५ ख्रीष्टस्य यीशो र्यादृशः स्वभावो युष्माकमपि तादृशो भवतु। स
६ ईश्वररूपः सन् आत्मानम् ईश्वरस्य सदृशं मानितुम् अपहरणं न ज्ञात्वा
७ आत्मानं क्षुद्रं कृत्वा मानववेशं धृत्वा दासरूपोऽभवत्। इत्थं मानुषरूपेण
८ परिचितो भूत्वा मृत्योः, अर्थात् क्रुशीयमृत्यो र्वशोभवनपर्य्यन्तं नम्रत्वं
९ स्वीकृतवान्। अतएव स्वर्गमर्त्यपातालस्थिता लोका यथा यीशो र्नाम्ना
१० जानुपातं कुर्व्वन्ति तथा पितुरीश्वरस्य महिमप्रकाशार्थं यीशुख्रीष्टं
११ प्रभुरिति जिह्वया स्वीकुर्व्वन्ति तदर्थम् ईश्वरस्तस्मै अत्युच्चपदं दत्तवान्
तथा सर्व्वेषां नाम्नां मध्ये तादृक् प्रधानं नाम दत्तवान्।

१२ हे मम प्रियभ्रातरो यूयं यथा सर्व्वदा मम समक्षम् आज्ञापालनम्
अकुरुत केवलं तन्न, इदानीमपि ममासमक्षम् तदधिकं कुरुत, तथैव भयेन
१३ कम्पेन च स्वस्वपरित्राणस्य कर्म्म साधयत। यत ईश्वरः स्वीयानुग्रहेण
१४ युष्माकं मनसाम् इच्छाम् कर्म्म च साधयति। अतएव येषां समीपे जीवन-
१५ वाक्यं प्रकाश्य ज्योतिःस्वरूपा भवथ एतादृशानां कुटिलानां विपथ-
गामिनाञ्च लोकानां मध्ये यूयं यथा निर्द्दोषा निष्कपटा ईश्वरस्य
निष्कलङ्कसन्ताना भवथ, तदर्थं वाग्युद्धं विवादञ्च विना सर्व्वाणि कर्म्माणि
१६ कुरुत। तस्मात् मम चेष्टापरिश्रमयो र्निरर्थकयो र्नसतोः ख्रीष्टस्यागमन
दिने ममानन्दो भविष्यति।

१७ अहं यद्यपि युष्माकं विश्वाससेवायज्ञे आहुतिस्वरूपो भविष्यामि
१८ तथापि युष्माकं सकलैः सार्द्धम् आनन्दितो हृष्टश्च भविष्यामि। अतएव
१९ यूयमपि मया सहिता आनन्दिता हृष्टाश्च भवत। युष्माकम् अवस्थाम्
अवगत्य यथाप्याश्वसितो भवामि तदर्थं प्रभो र्यीशोरनुग्रहात् तिमथिं
२० युष्माकं समीपं त्वरया प्रेषयितुं मदीयेच्छा जायते। मम सन्निधौ
सर्व्वतोभावेन युष्माकं मङ्गलचिन्तयिता तस्य सदृशोऽन्यः कोपि न विद्यते।
२१ अनेके ख्रीष्टयीशौ मनो न निधाय स्वीये स्वीये लाभे मनो निदधते।
२२ किन्तु पित्रा सहितः पुत्त्रो यथा कर्म्म करोति सोपि मया सहितस्तथा
२३ सुसंवादस्य सेवाम् अकार्षीत् एतस्य प्रमाणं यूयमपि जानीथ। अतएव

ममावृष्टेन यादृशं घटिष्यते तज्ज्ञात्वाहम् इदानीमेव युष्माकं समीपं तं
प्रेषयितुं चेष्टे। अपरम् अहमपि यत् त्वरया युष्माकं सन्निधावुपस्थास्यामि २४
तस्मिन् प्रभुना विश्वसिमि। अपरं युष्माभिः प्रेरितो मत्सहकारी भ्राता २५
मम प्रयोजनीयवस्तु समागयनकारी च इपाफ्रदितनामा सहसेना तमपि
युष्माकं समीपं प्रेरयितुं प्रयोजनम् बुद्धवान्। यतः स युष्माकं दर्शनाकाङ्क्षी २६
तथा युष्माभिस्तस्य पीडायावार्त्तायां श्रुतायां सोऽतीव चिन्तितवान्।
स पीडया मृतकल्पोऽभवदिति सत्यं किन्त्वीश्वरस्तं प्रति कृपां कृतवान् २७
केवलं तम्प्रति नहि मम दुःखस्योपरि यथा पुनर्दुःखं न घटते तदर्थं
मां प्रति च कृपां कृतवान्। अतएव यूयं पुनस्तं विलोक्य यथानन्दिता २८
भवथ मम दुःखस्य च ह्रासो यथा भवति तदर्थम् अहं तमतिशीघ्रं प्रेषित-
वान्। प्रमोदं कृत्वा प्रभोः कृते तं गृह्णीत, इत्थम् अन्येषां लोकानामपि २९
सत्कारं कुरुत। मम सेवने युष्मत्तो यत् प्रयोजनमासीत् तत् साधयितुं ३०
स निजप्राणान् तृणतुल्यान् विज्ञाय ख्रीष्टस्य कार्य्यनिमित्तं मृत-
कल्पोऽभवत्।

---

३ तृतीयोऽध्यायः।

१ त्वक्छेदादिभिः परित्राणाभावः केवलख्रीष्टविश्वासेन परित्राणं, ख्रीष्टं प्राप्तुं पौलस्योद्योगः १७ दुष्टलोकानाम् अनुगामिनो न भवितुं स्वस्यानुगामिनो भवितुं विनयश्च।

हे भ्रातृगण शेषे कथयामि यूयं प्रभावानन्दिता भवथ। कथामेतां पुनःपुन- १
र्युष्मान् प्रति लेखितुं मम कोपि क्लेशो नास्ति किन्तु युष्माकं रक्षा जायते।
अपरं यूयं कुक्कुररूपमनुष्येभ्यः सावधाना भवत, दुराचारिलोकेभ्यः सावधा- २
ना भवत, परिच्छेदकेभ्यश्च सावधाना भवत। वयं त्वक्छेदिनो भूत्वा आत्मना ३
ईश्वरं सेवमानाः ख्रीष्टयीशुनावानन्दिताः सन्तो जातौ विश्वासं न कुर्म्मः।
किन्तु मम जातौ विश्वासस्य कारणं विद्यते तस्माद् अहं जातौ विश्वासं ४
कर्त्तुं शक्नोमि, इत्थं यदि कश्चिद् वेत्ति तर्हि ततोऽधिकम् अहं कर्त्तुं
शक्नोमि। यतोऽहम् अष्टमदिवसे त्वक्छेदं प्राप्तवान् अपरम् इस्रायेलो ५

वंशीयो बिन्यामीनो गोष्ठीय इब्रिकुलजात इब्रीयस्तथा व्यवस्थापाल-
६ नाय फिरूशी तथा धर्म्मानुरागकारणात् समाजद्वेषी तथा व्यवस्थित
७ धर्म्माचरणाय निर्दोष आसम्। किन्तु तत्र मम ये ये लाभा आसन्
८ ख्रीष्टनिमित्तं तान् सर्व्वान् क्षतिम् अजानाम्। वस्तुतस्तु निजप्रभो यीशु-
९ ख्रीष्टस्योत्तमज्ञाननिमित्तं सर्व्वमेव क्षतिम् अमन्येऽहम्। अपरञ्चाहं
केनापि प्रकारेण श्मशानाद् उत्थानं प्राप्तुं यथा ख्रीष्टस्य मृत्युसदृशं मृत्युं
१० भुक्त्वा तं तस्य दुःखस्यांशं तस्योत्थानस्य शक्तिञ्च जानामि; यथा च व्यवस्था-
पालनजन्यस्वकृतपुण्येन पुण्यवान् न भूत्वा विश्वासकरणेन ख्रीष्टेन कृत-
पुण्येन, अर्थात् ख्रीष्टे विश्वासे कृते ईश्वरेण दत्तं यत् पुण्यं, तेन पुण्येन
११ पुण्यवान् भूत्वा कथमपि ख्रीष्टं प्राप्य तेन ग्राह्यो भवामि, एतदर्थं क्षतिं
१२ स्वीकृत्य तत्सर्व्वं लोष्टवद् जानामि। अहं यत् सर्व्वं प्राप्तः सिद्धो वाभवं तन्न
१३ किन्तु ख्रीष्टेन धृतोऽभवं तद् धर्त्तुम् अहं धावमानो भवामि। हे भ्रातरो-
ऽहमात्मानं तद्धृतवन्तं जानामि तन्न किन्तु पश्चात् स्थितं विस्मृत्य, अग्र-
१४ स्थितस्य चेष्टया ख्रीष्टयीशुना ऊर्द्ध्वाद् ईश्वरस्य यद् आह्वानं तेन पण-
१५ हेतो र्निरूपिते पथि धाविऽहं। वयं यावन्तो लोकाः सिद्धा भवितुम् इच्छाम
इत्थं बुध्यामहै, किन्तु युष्माकं बुद्ध्या यद्यन्यथा बोधो जायते, ईश्वरो युष्मान्
१६ प्रति तस्योदयं करिष्यति। तथाप्यस्माकं यत्पर्य्यन्ता ज्ञानस्य गति र्वयं
तदनुसारत एकविधिनाचराम, एकवाक्ये मनोनिधानं करवाम च।

१७ हे भ्रातरो यूयं ममानुगामिनो भूत्वा युष्माकं दृष्टान्तस्वरूपानाम्
१८ अस्माकं तुल्याचारिणाम् आचारस्य विवेचनां कुरुध्वं। यतोऽनेकेषाम्
आचरणेऽहं पुनः पुन र्युष्मभ्यम् अकथयं, इदानीमपि रुदन् कथयामि
१९ ते ख्रीष्टस्य क्रुशस्य रिपवः शेषे तेषां विनाशो घटिष्यते; ते जठरम् ईश्वरं
२० ज्ञात्वा स्वलज्जास्पदं श्लाघ्यमिति मन्यन्ते संसारे समासक्ताश्तिष्ठन्ति च। किन्तु
त्राता प्रभु र्यीशुख्रीष्टो यया महाशक्त्या सर्व्वाण्येव वशीकर्त्तुं शक्नोति
तया शक्त्यास्माकम् अधमं शरीरं स्वीयतेजोमयशरीरस्य सदृशं करिष्यति;
२१ तस्य स्वर्गाद् आगमनम् अपेक्ष्य वयं स्वर्गार्थम् आचारं कुर्म्मः।

## ४ चतुर्थोऽध्यायः।

१ विशेषं निवेदनं ४ नाना धर्म्मकर्म्मार्थम् उपदेशः १० पौलस्य कृतज्ञत्वं नमस्कारप्रेरणञ्च।

हे मदीयानन्दमुकुटस्वरूपाः प्रियतमा दृष्टतमा अतिशयप्रियभ्रातरो १
यूयम् इत्थं प्रभौ स्थिरास्तिष्ठत। हे उयोदिये हे सुन्तुखि युवां ख्रीष्टे २
एकचित्तौ भवतम् एतद् अहं विनयेन युवाभ्यां कथयामि। हे मम सत्य- ३
सहकारिन् त्वामपि विनीय वदामि सुसंवादप्रचारणसमये या योषितो
मया सार्द्धं परिश्रमं कृतवत्यः, अपरं जीवनपुस्तके यासां नामानि लिखि-
तानि सन्ति तासां ममान्यसहकारिणीनां क्लीमिनश्चोपकारं कुरुत।

यूयम् प्रभौ सर्व्वथा आनन्दिता भवत। पुनश्चाहं कथयामि आन- ४
न्दिता भवत। युष्माकं मृदुत्वं सर्व्वलोकानां समीपे प्रकाशितं भवतु, यतः ५
प्रभुः समीपवर्त्ती विद्यते। अतएव कुत्रापि न चिन्तयित्वा यूयं धन्यवादं ६
कृत्वा निवेदनेन याचनेन चेश्वरस्य सन्निधौ स्वेषां प्रार्थनीयानि विज्ञा-
पयत। तस्मात् सकलबुद्धीनाम् अगम्येश्वरस्य या शान्तिः सा ख्रीष्टयीशुना ७
युष्माकं मनसां बुद्धीनाञ्च रक्षां करिष्यति। हे भ्रातरः शेषे कथयामि ८
यद्यत् सत्यम् आदरणीयं निर्म्मलं न्याय्यं प्रियं सुख्यातञ्च, अन्यद्
तादृशं किञ्चन कर्म्म वा प्रशंसनीया कथा यदि तिष्ठति तर्हि तत्र
मनो निधत्त। यूयं मम सन्निधौ यद्यद् दृष्ट्वा श्रुत्वा शिक्षित्वा च गृहीत- ९
वन्तः तदनुसारेण व्यापारं कुरुत तस्मात् शान्तिदायक ईश्वरो युष्माकं
सङ्गी भविष्यति।

पूर्व्वं मां प्रति युष्माकं मनोनिधानम् आसीद् इति सत्यं किन्तु सुयोगो १०
नासीत्, इदानीं युष्माकं सा चिन्ता यत् पुनरुपातिष्ठत् तत्राहं प्रभौ
परमाह्लादितोऽभवम्। अहं दैन्यकारणाद् एतां कथां कथयामि तन्न ११
यतो यया कयाचिद् अवस्थया तिष्ठामि तदवस्थायामेव तुष्टः स्थातुं
शिक्षितोऽस्मि। दरिद्रतां भोक्तुं शक्नोमि प्रचुरम् ऐश्वर्य्यं भोक्तुञ्च शक्नोमि १२
यत्र कुत्रापि स्थाने वा यस्यां कस्याञ्चिद् अवस्थायां भवेयं प्रभूतम् आहारम्

१३ अनाहारञ्च प्रचुरम् ऐश्वर्य्यं दैन्यञ्च भोक्तुं शिक्षितोऽभवम्। मह्यं शक्तिदाता
१४ यः ख्रीष्टस्तस्य साहाय्येन सर्व्वाणि कर्त्तुं शक्नोमि। किन्तु यूयं मम दैन्यस्य
१५ समये उपकृत्य उत्तमं कर्म्म कृतवन्तः। हे फिलिपीयलोका अहं यदा सुसं-
वादं प्रचारयितुं प्रथमं माकिदनियां प्रति यात्राम् अकरवं तदा युष्मान्
विनान्यसमाजेन सह दानादानयो र्मम कोपि सम्बन्धो नासीत्, इति यूयं
१६ जानीत। थिषलनिकीनगरे मम स्थितिसमये यूयं मम दीनताकारणाद्
१७ एककृत्वो नहि द्वि र्दानं प्रेषितवन्तः। अहं यद् युष्मत्तो दानं प्रार्थये तन्न
१८ किन्तु युष्माकं लाभजनकं फलं प्रार्थये। किन्तु मम कस्याप्यभावो नास्ति
सर्व्वं प्रचुरम् आस्ते, ईश्वरस्य ग्राह्यं तुष्टिजनकं सुगन्धिनैवेद्यस्वरूपं यद्
१९ द्रव्यं युष्माभिरिपाफ्रदितेन प्रेरितं तत् प्राप्याहं सम्पूर्णो ऽस्मि। ममेश्वरः
स्वकीयविभवस्य धनानुसारतः ख्रीष्टयीशुना युष्माकं सर्व्वं प्रयोजनं सिद्धं करि-
२० ष्यति। सर्व्वदास्माकं पितुरीश्वरस्य धन्यवादो भवतु। इति॥ यीशु-
२१ ख्रीष्टस्यैकैकं पवित्रजनं नमत मम सङ्गिभ्रातरो युष्मभ्यं नमः कुर्व्वन्ति।
२२ अपरं सर्व्वेषां पवित्रलोकानां विशेषतः कैसरस्य परिजनानां नमस्कारं
२३ जानीत। अस्माकं प्रभो र्यीशुख्रीष्टस्यानुग्रहो युष्मान् प्रति भूयात्। इति।

---

# कलसिनः प्रति पौलस्य प्रेरितस्य पत्रम्।

## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ३ कलसीयलोकानां विश्वासनिमित्तं पौलस्य धन्यवदनं ९ तेषां पारमार्थिकमङ्गलार्थं तस्य प्रार्थना ख्रीष्टस्येश्वरत्वस्य प्रमाणं तान् प्रति ख्रीष्टस्यानुग्रहः २४ सुसंवादं प्रचारयितुं पौलस्य तदनुग्रहप्राप्तिश्च।

१ ईश्वरस्येच्छानुसारात् पौलनामा यीशुख्रीष्टस्यैकः प्रेरितः तिम-
थिनामास्माकम् एको भ्राता च कलसिनगरनिवासिनः पवित्रान् ख्रीष्टे

विश्वासिनो भ्रातॄन् प्रति पत्रं लिखतः। अस्माकं तात ईश्वरः प्रभु र्यीशु- २
ख्रीष्टश्च युष्मभ्यम् अनुग्रहं शान्तिञ्च क्रियास्ताम्।

यूयं पूर्व्वं सुसंवादस्य सत्यवाक्येन स्वर्गे सञ्चितस्य प्रत्याशितस्य च ३
सुखस्य कथाम् अशृणुत तेन ख्रीष्टयीशौ युष्माकं विश्वासस्य पवित्रलोकानां
प्रेम्नो वृत्तान्तं श्रुत्वा वयं युष्मन्निमित्तम् अस्माकं प्रभो र्यीशुख्रीष्टस्य ४
पितुरीश्वरस्य धन्यवादं कृत्वा सर्व्वदा प्रार्थयामहे। स सुसंवादो यद्वद् ५
युष्माकं समीपे समुपातिष्ठत् तद्वत् प्रायेण सर्व्वजगज्जनानां समीपेऽपि
समुपातिष्ठत्। अपरं तं श्रुत्वा सत्यतयेश्वरीयानुग्रहस्य प्राप्तत्वात् यथा ६
युष्माकं फलम् अजायत तथा प्रायशः सर्व्वजगज्जनानां फलम् जायते।
अपरम् इपाफ्रनामास्माकं प्रिय एकः सहदासो युष्माकं कृते ख्रीष्टस्य ७
विश्वास्यः सेवक अस्ति स तं युष्मान् अशिक्षयद् युष्माकं पारमार्थिकं ८
प्रेमास्मान् अज्ञापयच्च।

यदारभ्य वयं तां सुवार्त्ताम् अशृणुम तदारभ्य युष्माकं कृते प्रत्यहं प्रार्थ- ९
यितुं न निवृत्तवन्तः; अपरं यूयं यथा सकलज्ञानेन पारमार्थिकबुद्ध्या च
ईश्वरस्याभिमतेन सम्पूर्णज्ञानवन्तो भवथ, यथेश्वरस्य तत्त्वज्ञानेन बुद्धिं प्राप्य १०
सकलसत्कर्म्मणां फलेन फलवन्तो भूत्वा प्रभो र्योग्येन सर्व्वसन्तोषजनकेन-
चाचारेण पटवो भवथ, यथा चेश्वरस्य महिमयुक्तशक्त्यनुसारत आनन्देन सार्द्धं ११
सर्व्वसहिष्णुतां धैर्य्यावलम्बनञ्च कृत्वा सर्व्वबलै र्बलवन्तो भवथ, तदर्थम् इत्या-
काङ्क्षां कुर्म्मः। अपरञ्च तेजःस्थितानां पवित्रलोकानाम् अधिकारं भोक्तुं १२
अस्मान् योग्यान् अकरोत् यः पिता तस्य धन्यवादं कुर्म्मः। यतः सोऽ- १३
स्मान् अन्धकारस्य शासनाद् उद्धृत्य निजप्रियपुत्त्रस्य राज्यस्थान् प्रजाः
अकरोत् यस्य रक्तेन वयं परित्राणं, अर्थात् पापमोचनं प्राप्नुमः। सोऽदृश्यस्य १४
ईश्वरस्य प्रतिमूर्त्तिः सकलसृष्टीनाम् आदिकर्त्ता। अपरञ्च सिंहा- १५
सनं वा राजत्वं वा प्रभुत्वं वा पराक्रमो वा, स्वर्गस्थितं मर्त्त्यस्थितं १६
वा भवेत् दृश्यम् अदृश्यं वा भवेत् यद्यत् पदं वस्तु वास्ते सर्व्वं तत्कर्त्तृकं तस्य
कृते सृष्टम् अभवत्। स सर्व्ववस्तूनाम् आदिः सर्व्वेषां स्थितिकारकश्च १७

१८ अपरञ्च यथा सर्व्वथा तस्य प्राधान्यं जायते तदर्थं स आदिः श्मशानात्
१९ प्रथमत उत्थितश्च भूत्वा समाजकलेवरस्योत्तमाङ्गस्वरूपोऽभवत्। यत
२० तस्मिन् सर्व्वसम्पूर्णत्वं तिष्ठेत् तत् पितुरभिमतं। अपरं स्वेन सार्द्धं तद्वारा
सर्व्वेषाम् अर्थात् स्वर्गमर्त्त्यस्थितानां मेलनं कर्त्तुं तस्य क्रुशस्य रक्तेन सन्धिं
२१ कृतवान्। अतएव पूर्व्वं पापकरणाद् ईश्वरपराङ्मुखा मनःसु तस्य रिपव
२२ आध्वं ये यूयं तान् युष्मान् स्वस्यसाक्षात् पवित्रान् निष्कलङ्कान् निर्द्दोषांश्च
उपस्थापयितुं ख्रीष्टस्य मांसपिण्डशरीरस्य मरणेन स्वेन सार्द्धं मेलनं
२३ कृतवान्। अपरञ्च यूयं यं सुसंवादम् अश्रौष्ट, यश्च स्वर्गाधःस्थितान् प्रायेण
सर्व्वजगज्जनान् प्रति प्रकाशितोऽभवत्, यस्य च प्रकाशक एकः पौलोऽहं,
तस्य सुसंवादस्य प्रत्याशातो निश्चलाः सन्तः ख्रीष्टस्य धर्म्मे बद्धमूलाः
स्थिराश्च भूत्वा तिष्ठत।

२४ इदानीम् अहं युष्माकं कृते निजदुःखेऽप्यानन्दं करोमि तथा
ख्रीष्टस्य क्लेशभोगस्य या न्यूनतासीत् ताम् अहं तस्य शरीरसमाजस्य
२५ कृते निजशरीरेण सम्पूर्णं भुञ्जे। पूर्व्वम् ईश्वरस्य यद् वाक्यम् अर्थाद्
यन्निगूढं वाक्यं पूर्व्वं पूर्व्वपुरुषाणां समीप अप्रकाशितम् आसीत् तद्
२६ इदानीं पवित्रलोकानां सन्निधौ प्रकाशितम् अभवत् तथेश्वरस्य
वाक्यं प्रचारयितुं युष्मन्निमित्तम् ईश्वरदत्तपदानुसारतोऽहं तस्य समा-
२७ जस्य सेवकोऽभवम्। अपरम् अन्यदेशिषु यन्निगूढवाक्यस्यातिशयश्रेष्ठतां
युष्मान् ज्ञापयितुम् ईश्वरोऽभ्यलषत् तस्य निगूढवाक्यस्य फलस्वरूपो
२८ युष्माकम् अन्तरे विभवस्य प्रत्याशाजनकः ख्रीष्टोऽभवत्। अतएव ख्रीष्ट-
यीशुना सिद्धम् एकैकं मानुषं तस्य समीप उपस्थापयितुं वयम् एकैक-
जनाय चेतनां सर्व्वप्रकारज्ञानजनकम् उपदेशञ्च दत्त्वा तदीयां कथां
२९ प्रचारयामः। अपरं तस्मिन् मया बलवत्स्वरूपेण सफलक्रियाकारी तस्य
यः पराक्रमः, तेनाहमपि महायत्नेन परिश्राम्यामि।

## २ द्वितीयोऽध्यायः।

१ ख्रीष्टधर्म्मे स्थातुं तान् प्रति पौलस्य विनयः ८ निरर्थककापथ्यविद्याया निषेधः १९ दिव्यदूतानां पूजानिषेधः २० सांसारिककर्म्मसूत्रं मानुषाणां विधिञ्च त्यक्तुं निवेदनञ्च।

युष्माकं लायदिकियासमाजस्य मम मुखादर्शिनां सर्व्वलोकानाञ्च १
कृते मम कियान् क्लेश इति किञ्चिद् युष्मान् ज्ञापयितुम् इच्छामि
तस्मात् ते पितुरीश्वरस्य ख्रीष्टस्य च निगूढवाक्यं स्वीकृत्य सर्व्वसम्पूर्णं २
ज्ञानधनं प्राप्य प्रेम्ना बद्धाः सन्तो मनःसु शान्तियुक्ता भविष्यन्ति।
तत्त्वज्ञानबुद्धिरूपं यद्धनं तत् सर्व्वं ख्रीष्टे गुप्तम् आस्ते। अतएव कथयामि ३
युष्मान् कोऽपि प्रियालापं कृत्वा न भ्रमयेत्। अहं यद्यपि शरीरेण युष्माभिः ४
साक्षात्कृतो न तिष्ठामि तथापि मनसा युष्माकम् असाक्षात् न तिष्ठामि ५
ख्रीष्टे युष्माकं सुरीतिम् विश्वासस्थैर्य्यञ्च दृष्ट्वानन्दामि। यूयं यद्वत् ६
प्रभुं यीशुख्रीष्टम् अगृह्लीष्ट तदनुरूपम् आचरत। ख्रीष्टे बद्धमूला ७
ग्रथिताश्च भूत्वा तस्य धर्म्मे स्थिरा भवत; तथा प्राप्तोपदेशानुसारत
ईश्वरस्य धन्यवादं कृत्वा तस्मिन् बर्द्धिष्णवो भवत।

सावधाना भवत सांसारिककर्म्मसूत्रानुसारेण गुरुवाक्यं प्रमाणं दत्त्वा ८
ख्रीष्टधर्म्मविरुद्धं निरर्थककापथ्यविद्यया कोऽपि युष्मान् न भ्रमयेत्।
यस्मात् ख्रीष्टस्य सम्पूर्णरूपेणेश्वरत्वम् अस्ति; तथा स निखिलराज्यस्य ९
पराक्रमस्य च मस्तकस्वरूपः, तेन यूयं सिद्धा भवथ। अपरं शारीरिक- १०
पापसमूहत्यागेन, अर्थात् ख्रीष्टस्य त्वक्छेदेन यूयम् अहस्तकृतत्वक्छेदिनो ११
जाताः। अपरञ्च मज्जनेन ख्रीष्टेन सार्द्धं श्मशानशायिनो भूत्वा श्मशा- १२
नात् तस्योत्थापकस्येश्वरस्य पराक्रमे विश्वस्य ख्रीष्टेन सहिता उत्थापिता
अभवत। तथा पापेन शारीरिकत्वक्छेदव्यवस्थया च मृतानां युष्मा- १३
कम् सर्व्वाणि पापानीश्वरः परिक्षम्य तेन सह युष्मान् सजीवान् अक-
रोत्। अपरम् अस्माकं रिपुस्वरूपो यो हस्तलिखितो विधिः, तम् अस्माकं १४
मध्यान् नीत्वा क्रुशे बिद्धवान्। तेन प्रधानं पराक्रमिणं भूतगणं संदम्य १५
जय जयेति शब्देन तान् सप्रकाशम् अलज्जयत्।

१६ खाद्याखाद्ये पेयापेये उत्सवः प्रतिपत् विश्रामवारश्च सर्व्वेष्वेतेषु कमपि
१७ युष्माकम् उपर्य्यधिपतित्वं मा कारयत। यतः स्वयं वस्तु यः ख्रीष्टस्तस्य
भाविनि कार्य्ये एतानि सर्व्वाणि केवलप्रतिविम्बस्वरूपाणि जातानि।
१८ अपरञ्च नम्रतां दूतानां सेवनञ्च कृत्वा सांसारिकेण मनसा मुधा
गर्व्वितो भूत्वाऽदृश्यस्य चर्चां करोति तथा यस्मात् सर्व्वसन्धिभिः सिरा-
१९ भिश्च सर्व्वं शरीरं संयुक्तं प्रतिपालितञ्च भूत्वा महावृद्ध्या वृद्धिम् एति
तं मस्तकस्वरूपं ख्रीष्टम् अमान्यं करोति यो जनः स युष्मान् फलेन
मा वञ्चयेत्।

२० यदि यूयं सांसारिकक्रियाभ्यः ख्रीष्टेन सार्द्धं म्रियध्वे तर्हि
२१ भुक्तमात्रात् नष्टानि यानि द्रव्याणि तानि मा स्पृशत मा भुङ्ग्ध्वं मा
२२ गृह्णीत मानुषाणां यायं विधिराज्ञा च सांसारिकलोकाइव कथं तद्व-
२३ शिनो भवथ? स विधिः शरीरपोषणार्थम् आदरणीयो न भवति किन्तु
स्वेच्छाभजनेन नम्रतया शारीरिकक्लेशेन च ज्ञानवत् प्रकाशते।

---

३ तृतीयोऽध्यायः।

१ स्वर्गस्थख्रीष्टस्योपरि मनो निधातुं पौलस्य विनयः ५ पापदमनार्थं नानाधर्म्म-
कर्म्मकरणार्थञ्च निवेदनं १८ स्त्रीपुरुषयो र्बालकानां मातापित्रो र्दासानां प्रभूणाञ्च
कर्त्तव्यकर्म्मनिर्णयः।

१ यदि यूयं ख्रीष्टेन सार्द्धम् उत्थापिता अभवत तर्हि यस्मिन् स्थाने ख्रीष्ट ईश्वरस्य
२ दक्षिणपार्श्वे उपविष्टः, तत्रस्थद्रव्याणामन्वेषणं कुरुत। पृथिवीस्थ-
३ द्रव्येषु मन आसक्तम् अकुर्व्वन्त उपरिस्थद्रव्येष्वासक्तं कुरुत। यतो यूयं
मृता अभवत तथा ख्रीष्टस्य समीपे युष्माकं परमायुरीश्वरेण गुप्तम् आस्ते।
४ अतएवास्माकं परमायुःस्वरूपो यः ख्रीष्टः स यदा प्रकाशितो भविष्यति
तदा यूयमपि तेन सार्द्धम् ऐश्वर्य्येण प्रकाशिता भविष्यथ।

५ अपरं यूयं वेश्यागमनम् अशुचिक्रिया अनुचितस्नेहः कुत्सिताभिलाषो
देवपूजास्वरूपो लोभः पृथिव्याम् इन्द्रियाणाम् एतानि कार्य्याणि विना-
६ शयत। एतेभ्यः कर्म्मभ्य आज्ञालङ्घिनो लोकान् प्रति ईश्वरस्य क्रोधः
७ फलवान् भवति। पूर्व्वं यूयमपि तैः सार्द्धं कालं यापयित्वा तेषु व्यापारं-

कृतवन्तः; किन्त्विदानीं क्रोधो रागो जिघांसा दुर्मुखता मुखेभ्यः ८
कुत्सितालाप एतान् सर्व्वान् दूरीकुरुत। अपरञ्च युष्माकम् एको जनो- ९
ऽन्यजनं प्रति मृषाकथां न कथयतु; यतो यूयं कर्म्मणा सार्द्धं पुरातन- १०
स्वभावं परित्यज्य सृष्टिकर्त्तुः प्रतिमूर्त्त्यनुसारतो ज्ञानेन पुनर्निर्म्मितो यो
नवीनः स्वभावस्तं गृहीतवन्तः। तेन नवीनस्वभावेन युष्माकं मध्ये ११
यिहूदी वा भिन्नदेशी वा त्वक्छेदी वात्वक्छेदी वा म्लेच्छो वा स्कुथीयो
वा स्वाधीनो वा पराधीनो वा एतेषां कस्यापि कोपि विशेषो नास्ति किन्तु
सर्व्वेषु सर्व्वं ख्रीष्ट एवास्ते। अतएव ईश्वरस्य मनोनीतलोका इव पवित्राः १२
प्रियाश्च भूत्वा,अन्तरे दयानुग्रहो नम्रता मृदुता धैर्य्यम् एतैः सर्व्वै र्विभू-
षिता भवत। यूयम् एकैकस्याचरणं सहध्वं परस्परम् अपराधञ्च क्षमध्वं; १३
वस्तुतस्तु यदि केनचित् सह कस्यचिद् विवाद उपतिष्ठति तर्हि ख्रीष्टो
यथा युष्मान् क्षमत यूयमपि तथा कुरुत। विशेषतः सिद्धिजनकेन १४
प्रेमबन्धनेन बद्धा भवत। अपरम् ईश्वरेण दत्ताया यस्याः शान्ते र्निमित्तं १५
यूयम् एकस्मिन् शरीरे समाहूता अभवत सा शान्ति र्युष्माकं मनःसु
विराजतां, तथा यूयं कृतज्ञा भवत। अपरं ख्रीष्टस्य वाक्यं सम्पूर्णरूपेण १६
युष्माकम् अन्तःकरणेषु स्थेयात्, तथा गीतै र्गानैः पारमार्थिकसंकीर्त्तनैश्च
परस्परं निखिलज्ञानम् उपदिश्य मन्त्रयित्वा च युष्माकं मनसा प्रभुम्
उद्दिश्य गायत। अपरञ्च यूयं कायिकं वाचिकं वा यद्यत् कर्म्म कुरुथ १७
पितुरीश्वरस्य धन्यवादं कुर्व्वन्तः प्रभो र्यीशो र्नाम्ना तत् सम्पादयत।

हे योषितो यूयं प्रभो र्विधिना स्वामिनो वश्या भवत। हे स्वामिनो १८
यूयं स्वीयस्वीयभार्य्यां परुषवाक्यं नोक्त्वा ताभिः सार्द्धं प्रेम कुरुत। हे बालका १९
यूयं सर्व्वकार्य्येषु पित्रोराज्ञां पालयत यत एतत् कर्म्म प्रभोः सन्तोषजनकं २०
भवति। हे पितरो यूयं स्वीयस्वीयबालकानां क्रोधं मा जनयत नो चेत् २१
तेषां मनोभङ्गो भविष्यति। हे भृत्या यूयं केवलं समक्षं मनस्तुष्टिजनकं कर्म्म २२
न कृत्वा,ईश्वराद् भीत्वा,अन्तःकरणानां सारल्येन सर्व्वत्र युष्माकम् ऐहिक- २३
प्रभूनाम् आज्ञां पालयत। अपरं प्रभोः सकाशात् स्वर्गाधिकाररूपं फलं २४

प्राप्स्याम इति विदित्वा यूयं यत् कर्म्म कुरुथ तत् मानुषम् उद्दिश्य न
कृत्वा प्रभुम् उद्दिश्य प्रफुल्लमनसा कुरुत, यस्माद् यूयं प्रभोः ख्रीष्टस्य सेवां
२५ कुरुथ। किन्तु यो जनोऽविहितं कर्म्म करोति सएव स्वीयाविहितकर्म्मणः
२६ प्रतिफलं प्राप्स्यति तत्र पक्षपातो न भविष्यति। अपरञ्च हे अधिपतयः
स्वर्गे युष्माकम् एकोऽधिपति र्विद्यते, इति विज्ञाय निजदासान् प्रति
यथार्थम् उचितञ्च व्यवहरणं कुरुध्वम्।

---

## ४ चतुर्थोऽध्यायः।

१ प्रार्थनायां नित्यं प्रवर्त्तितुं सांसारिकलोकानां समीपे सावधानतया आचरितुञ्च निवेदनं ७ भ्रातृगणेषु नानाकथा नमस्कारप्रेषणञ्च।

१ यूयं प्रार्थनायां नित्यं प्रवर्त्तध्वं धन्यवादं कुर्व्वन्तस्तत्र जाग्रतस्तिष्ठत।
२ अपरं ख्रीष्टस्य यन्निगूढवाक्यकारणाद् अहं बद्धोऽभवं तद् वाक्यं प्रका-
३ शयितुम् ईश्वरो यथास्माकं कृते प्रचारणस्य द्वारं मोचयति; अपरम्
४ अहं कर्त्तव्यानुसारेण यथा तत् प्रचारयितुं शक्नोमि, तदर्थं यूयं अस्माकं
५ कृते प्रार्थयध्वम्। अपरम् असमाजीयलोकानां सन्निधौ ज्ञानस्याचरणं
६ कृत्वा समयं सफलं कुरुत। अनुग्रहलवणेन युष्माकम् आलापः सर्व्वदा
आस्वादयुक्तो भूयात् अपरञ्च एकैकजनाय यदुत्तरं दातव्यं तज् जानीत।
७ मम प्रियो भ्राता सहदासश्च तुखिकनामा यः ख्रीष्टे कृतविश्रामः
८ सेवकः स मदीयं सर्व्वं युष्मान् ज्ञापयिष्यति। यूयं कीदृश आध्वे इति
ज्ञातुं तथा युष्माकं मनांसि सान्त्वयितुञ्च तम् अनीसिमनामानं युष्माकं
९ विश्वास्यं प्रियं भ्रातरञ्च युष्माकं सन्निधिं प्रेषितवान् अचत्यां सर्व्ववार्त्तां
१० तौ युष्मान् ज्ञापयिष्यतः। बर्णब्बाभागिनेयो यस्मिन् मार्के यूयम् एताम्
आज्ञां प्राप्ताः स यदि युष्माकं समीप उपतिष्ठति तर्हि तं गृह्लीत; स तथा
सहबन्दी यः आरिस्तार्खो युस्तनाम्ना विख्यातो यिशुश्च, एते सर्व्वे त्वक्छेदि-
११ लोका एतस्मिन् पत्रे युष्मान् नमस्कारं ज्ञापयन्ति। केवलम् एते कति-
पयजना ईश्वरस्य राज्यनिमित्तं मम सहाया भूत्वा मम शान्तिकारका
१२ अभवन्। अपरञ्च यथा यूयम् ईश्वरस्य सर्व्वेच्छया सिद्धाः सम्पूर्णाश्च भूत्वा

तिष्ठथ तदर्थं यत्नेन प्रार्थयते युष्माकं य एको जनः ख्रीष्टस्य दास इपाफ्राः
स युष्मभ्यं नमः करोति। स जनो युष्माकं लायदिकिया-हियरापलि- १३
समाजीयलोकानां हिताय कीदृश उद्योगी तत्राहं साक्षी विद्ये। अपरञ्च १४
लूकनामा प्रियचिकित्सको दीमाश्च युष्मभ्यं नमः करोति। तथा १५
लायदिकियाप्रवासिनो भ्रातृन् नुम्फां तस्य गृहस्थितं समाजञ्च नम-
स्कारं ज्ञापयत। अपरञ्च युष्माभिरेतत्पत्रे पठिते सति तत्पत्रं पठितुं १६
लायदिकीयेभ्यो दायिष्यते तथा लायदिकीयान् प्रति यत्पत्रं तत् यूय-
मपि पठिष्यथ। अपरं यत् सेवनपदं प्राप्तवान् तत् सावधानतया साधयस्व १७
कथामेतां आर्खिप्पकं वदत। अहं पौलः स्वहस्ताक्षरेण युष्मान् नमस्कारं १८
ज्ञापयामि; यूयं मम बन्धनं स्मरत; युष्मान् प्रत्यनुग्रहो भूयात्। इति।

---

# थिसलनीकिनः प्रति पौलस्य प्रेरितस्य प्रथमं पत्रम्।



## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं २ थिसलनीकिनां प्रत्ययप्रत्याशाप्रेमाचरणस्य प्रशंसनम्।

पौलसिल्वानतिमथिनामानस्त्रयोजनाः पितुरीश्वरस्य प्रभो र्यीशु- १
ख्रीष्टस्य चाश्रितथिसलनीकीयसमाजं प्रति पत्रं लिखन्ति; अस्माकं
पितुरीश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मान् प्रति शान्तिम् अनुग्रहञ्च क्रियात्।
हे प्रियभ्रातरो यूयम् ईश्वरस्य मनोनीता अभवत, इति विज्ञाय २
अस्माकं पितुरीश्वरस्य साक्षात् प्रभौ यीशुख्रीष्टे युष्माकं विश्वासेन यत् ३
कार्य्यं प्रेम्ना यः परिश्रमः प्रत्याशया च यद् धैर्य्यं तत् स्मृत्वा वयं स्वेषां
प्रार्थनायाः समये युष्माकं नामान्युच्चार्य्य युष्माकं सर्व्वेषां कृते नित्यम् ४
ईश्वरस्य धन्यवादं कुर्म्मः। यतोऽस्माकं सुसंवादो युष्मान् प्रति केवलं वाक्य- ५
मात्रं न भूत्वा शक्तिविशिष्टः पवित्रेणात्मना युक्तो बहुप्रमाणसम्बलितश्चाभवत्

६ वयन्तु युष्माकं मध्ये स्थित्वा युष्माकं कृते यादृग् व्यवहृतवन्तस्तद्
७ युष्माभिरज्ञायि; तथा यूयमपि बहुक्लेशभोगेन पवित्रेणात्मना दत्तान-
न्देन च वाक्यं परिगृह्य, अस्माकं प्रभोश्चानुकारिणो भूत्वा माकिदनिया-
८ खायादेशयोः स्थितानां सर्व्वविश्वासिनां दृष्टान्तस्वरूपा अभवत। अपरं
माकिदनियाखायादेशयो र्युष्माभिः प्रभो र्वाक्यं प्रचारितम् आस्ते तत्
केवलं नहि प्रायेण सर्व्वेषु :स्थानेष्वेव युष्माकम् ईश्वरे विश्वासस्य कथा
व्याप्ताभवत् एतत्कारणाद् युष्मासु अस्माकं कस्या अपि कथायाः कथनं
९ प्रयोजनं नास्ति। युष्माकं सन्निधौ वयं कथं समुपस्थिताः, अपरं कथं
१० यूयम् अमरस्य सत्यस्येश्वरस्य सेवनार्थं तथा यं श्मशानाद् ईश्वर उद-
स्थापयद् अर्थाद् भाविक्रोधाद् अस्माकं रक्षक ईश्वरस्य पुत्रो यो यीशु-
स्तस्य स्वर्गाद् आगमनापेक्षणार्थं यूयं प्रतिमाया विमुखीभूयेश्वरं प्रति
परावर्त्तन्त, एताः सर्व्वाः कथास्ते प्रकाशयन्ति।

## २ द्वितीयोऽध्यायः।

१ पौलेन केन प्रकारेण थिषलनीकिनां सन्निधौ सुसंवादः प्रकाशितोऽभवत् तदाख्यानं १३ ते कथं सुसमाचारं गृहीतवन्त इत्यस्य कथनं १७ तान् साक्षात् कर्त्तुं पौलस्येच्छा च।

१ हे भ्रातरो मम युष्माकं निकटागमनं मुधा न जातम् इति यूयं जानीथ।
२ अपरं वयं पूर्व्वं फिलिपीयनगरे नानाप्रकारदुःखम् अपमानञ्च सहमाना
ईश्वरेणाक्षोभं प्राप्य बहुयत्नेन निर्भयम् ईश्वरस्य सुसंवादं युष्माकं
३ समीपे प्राचारयाम तदपि यूयं जानीथ। वयं भ्रान्त्या वाशुचिक्रियया
४ वञ्चनया वा युष्मान् नोपादिशाम। किन्त्वीश्वरेण परीक्षितेष्वस्मासु येन
रूपेण सुसंवादः समर्पितोऽभवत् तदनुसारतो मानुषाणां तोषजनका
न भूत्वा अस्माकम् अन्तःकरणपरीक्षकेश्वरस्य तुष्टिजनका भूत्वा
५ प्रचारयामः। वयं कदापि मनोरञ्जणस्य कथां कथयित्वा छल-
वस्त्रेण लोभम् आच्छन्नं नाकुर्म्म तत्र यूयं जानीथ तथा तत्रेश्वरोऽपि
६ साक्षी विद्यते। अपरं वयं मानुषाद्वा युष्मत्तो वा कस्माच्चिद् अन्यतोऽपि
सम्मानं न चेष्टामहे, तथापि स्वाम् ख्रीष्टस्य प्रेरितान् विज्ञाय वयं युष्मा-

कम् उपरि भारं न्यसितुम् अशक्ष्याम; किन्तु युष्माकं समीपे मृदुभावा ७
भूत्वा यथा काचिन् माता शिशून् प्रतिपालयति तथा वयं युष्माकं
मङ्गलाकाङ्क्षिणो भूत्वा केवलम् ईश्वरस्य सुसंवादं दातुं नहि स्वीयस्वीय- ८
प्राणान् अपि दातुं मममन्यामहि, यतो यूयम् अस्माकं प्रियपात्राण्य-
भवत। हे भ्रातरो युष्मत्कारणाद् वयं कतिपरिश्रमान् क्लेशभोगांश्च ९
कृतवन्तो युष्माकं कस्याप्युपरि भारं न न्यसितुं केन प्रकारेण दिवानिशं
परिश्रम्य युष्माकं समीप ईश्वरस्य सुसंवादं प्राचारयाम तद् यूयं
स्मरत। अपरञ्च विश्वासिनो युष्मान् प्रति वयं कीदृक्पवित्रत्वेन यथा- १०
र्थत्वेन निर्दोषत्वेन चाचरितवन्त एतस्मिन् यूयम् ईश्वरश्च साक्षिण
आध्वे। अपरञ्च यद्वत् पिता बालकान् उपदिशति तद्वद् स्वीय- ११
राज्याय विभवाय च युष्माकम् आह्वाता य ईश्वरस्तस्योपयुक्तम् आचा- १२
रम् आचरितुं वयमपि युष्माकम् एकैकजनाय सान्त्वनोपदेशाज्ञा दत्त-
वन्तः या एता इति यूयं जानीथ।

यस्मिन् समये यूयं मम मुखाद् ईश्वरस्य वाक्यम् अशृणुत तस्मिन् १३
समये मानुषाणां कथावत् तदगृहीत्वा विश्वासिनां युष्माकं सर्व्व-
कार्य्यसाधकं यद् ईश्वरस्य वाक्यं तत् सत्यं विज्ञाय गृहीतवन्त इति-
कारणाद् वयं नित्यम् ईश्वरं धन्यं वदामः। हे भ्रातरो यूयं यिहूदीय- १४
देशस्थानां खीष्टयीशुम् आश्रितानाम् ईश्वरस्य समाजलोकानाम्
अनुकारिणोऽभवत, अपरं ते यद्वद् यिहूदिलोकेभ्यः, तद्वद् यूय-
मपि स्वदेशीयलोकेभ्यो दुःखम् अभुङ्ग्ध्वं। अमी यिहूदिनः प्रभुयीशुं १५
भविष्यद्वादिनश्च हतवन्तः, अपरम् अस्मानपि ताडितवन्तः, अपरम् ईश्व-
रस्यासन्तोषजनकं सर्व्वमानवानां विपरीतम् आचारं कृत्वा भिन्नदे- १६
शिनां परित्राणार्थं सुसंवादं प्रचारयितुम् अस्मान् निषिध्य स्वीयस्वीय-
पापं सम्पूर्णं कृतवन्तः-, किन्तु शेषे तान् प्रति कोपः फलवान् भविष्यति।

हे भ्रातर आन्तरिकभावेन नहि किन्तु वाह्यभावेन कियत्कालं १७
युष्माभिः सह विच्छेदाद् युष्माकं मुखानि द्रष्टुं वयम् अत्याकाङ्क्षया

१८ बड यतितवन्तः। अपरं शैतानास्माकं विघ्ने न जनिते वयं विशेषतः
१९ पैालोहं द्विरेकक्रत्वो वा युष्माकं समीप उपास्थास्यम्। अस्माकं
यत् प्रत्याशा वानन्दो वा श्लाघाकिरीटं वास्माकं प्रभो र्यीशुख्रीष्टस्या-
गमनकाले तस्य साक्षात् तत् किं यूयं नहि? अवश्यं यूयम् अस्माकं गौरवा-
नन्दस्वरूपा भवथ।

---

३ तृतीयोऽध्यायः।

१ तान् सान्त्वयितुं तिमथेः प्रेषणं, तिमथेौ प्रत्यागते तेषां वार्त्ताश्रुत्या पैालस्य धन्य-
वादः प्रार्थना च।

१ यदा वयं पुन र्धैर्य्यम् अवलम्ब्य स्थातुं नाशक्नुम तदा आथिनीनगरे
२ विनियुक्ताः स्थातुम् उचितम् अबुध्यामहि। अपरम् अस्माकम् अनेन क्लेशेन
३ युष्माकं यथा कोऽप्युद्विग्नो न भवति तदर्थं युष्माकं विश्वासे सान्त्वनां
दातुं युष्मान् स्वस्थान् कर्त्तुञ्च ख्रीष्टस्य सुसंवादप्रचारणे मम सहायो भ्राता
४ ईश्वरस्य सेवको यस्तिमथियस्तं युष्माकं समीपं प्रेषितवन्तः। वयं यद्
एतस्मिन् क्लेशे नियुक्ता आस्महे तद् यूयं जानीथ, अपरम् अस्माकम् एषा
दुर्गति र्घटिष्यत, इमां कथां युष्माकं समीपे स्थितिकाले वयं युष्मभ्यं
५ कथितवन्तः, तादृशमेवाभवत् तदपि यूयं जानीथ। तथापि परीक्षकेण
युष्मासु परीक्षितेषु चेद् अस्माकं परिश्रमो मुधा भवतीत्याशङ्कया धैर्य्यम्
६ अवलम्बितुम् अशक्तः सन् युष्माकं विश्वासं वेदितुं तं प्रेषितवान्। इदानीम्
असौ तिमथि र्युष्माकं समीपात् प्रत्यागत्य युष्माकं विश्वासस्य प्रेम्नश्च
कथाम् अपरं वयं यथा युष्माकं दर्शनाकाङ्क्षिणो यूयमप्यस्मान् साक्षात्
कर्त्तुं तथैवाकाङ्क्षिणो भूत्वा सन्ततम् अस्मान् स्मरथ, एताः सर्व्वाः शुभ-
७ वार्त्ताश्च कथितवान्। हे भ्रातरो युष्माकं तेन विश्वासेन वयं सर्व्वे दुःखे
८ क्लेशे च युष्मत्कारणात् सान्त्वनायुक्ता भवामः; यतो युष्मासु प्रभोराश्रये
९ सुस्थिरेषु स्थितेष्वधुना वयं जीवामः। वयम् ईश्वरस्य साक्षाद् युष्मत्तो
नानाप्रकारानन्दैरानन्दयुक्ता भवामः, तस्माद् युष्मदर्थम् ईश्वरस्य सन्निधौ
१० पुनरपि कियतो धन्यवादान् कर्त्तुं शक्ष्यामः? युष्माकं विश्वासे यद् असिद्धं

विद्यते तत् सिद्धं कर्त्तुं युष्मान् साक्षात् कर्त्तुञ्च वयं दिवानिशम् अतीव
प्रार्थयामहे। अस्माकं तात ईश्वरोऽस्माकं प्रभु यीशुख्रीष्टस्च युष्मान् ११
प्रत्यस्माकं गमनपथं सुगमं करोतु। अपरञ्च यदास्माकं प्रभु यीशु- १२
ख्रीष्टः सर्व्वैः पवित्रलोकैः सार्द्धम् आगमिष्यति तदास्माकं पितुरीश्वरस्य
ाद्यात् पवित्रतया युष्माकं मनांसि यथा निर्दोषत्वेन स्थिराणि करोति;
तदर्थं युष्मान् प्रत्यस्माकं यादृशं प्रेम विद्यते प्रभु र्युष्माकम् ऐककजनं प्रति १३
सर्व्वान् लोकांश्च प्रति तादृशं प्रेमाधिकतरं बहुतरञ्च करोतु।

---

४ चतुर्थोऽध्यायः।

१ आज्ञापालनकारणात् तेषां प्रशंसा २ अशुचित्वस्य निषेधः ९ परस्परं प्रेमकर्त्तुं कर्म्म कर्त्तुञ्चाज्ञा १३ मृतलोकार्थम् अतिशयशोकनिषेधः शेषदिवसीयघटनाया निर्णयश्च।

हे भ्रातरः कीदृशमाचारं कर्त्तुम् ईश्वरं तोषयितुञ्च प्रयोजनमस्ति १
इति यां कथां यूयम् अस्मत्तः प्राप्तवन्तः तदनुसारेण तत्र पुनरतिशयं
यत्नं कुरुत, इति प्रभुयीशुना विनीय युष्मान् उपदिशामि। यतो वयं २
प्रभुयीशुना युष्मान् यादृशीर् आज्ञा अकुर्म्म ता यूयं जानीथ।
युष्माकम् एकैको जनो यद् व्यभिचारं परित्यज्य पवित्रतया सम्मानेन च ३
स्वीयं स्वीयं शरीरं रक्षति; अपरम् ईश्वरानभिज्ञा भिन्नदेशीयलोका इव ४
इन्द्रियाणां वशो न भवति; अपरञ्च कामुको भूत्वा स्वीयभ्रातृन् प्रति ५
काञ्चित् प्रवञ्चनां न करोति,युष्माकम् एतादृशं पवित्रत्वम् ईश्वराभिमतम्।
वयं पूर्व्वं युष्मभ्यं यादृशं कथयित्वा साक्ष्यम् अददाम तदनुसारतः प्रभु- ६
स्तेभ्यो दुष्कर्म्मकारिलोकेभ्यः प्रतिफलं दास्यति। यस्माद् ईश्वरोऽस्मान् ७
अशुचिक्रियाकरणार्थम् अनाहूय सत्क्रियाकरणार्थमेवाहूतवान्। अत- ८
एव यः कश्चिद् अस्मान् अवजानाति स केवलं मनुष्यम् नावजानाति यः
स्वीयं पवित्रम् आत्मानम् अस्मभ्यम् अददात् तम् ईश्वरमप्यवजानाति।
हे भ्रातरो भ्रातृभिः सार्द्धं प्रेमकरणे युष्मान् प्रति मम लिखनम- ९
धिकमेव, यूयं परस्परं प्रेम कर्त्तुम् ईश्वरेण शिक्षिताः। अपरं सर्व्वान् १०

माकिदनियादेशीयभ्रातॄन् प्रति तत् कुरुथ च, तथापि युष्मान् विनीय
११ वदामि यूयम् प्रेम बहुतरं वर्द्धयत। अपरञ्च अन्यलोकान् प्रति युष्मा-
कम् आचरणं यथा सरलं भवति युष्माकं कापि न्यूनता च न तिष्ठति,
१२ एतदर्थं वयं यादृशम् आदिशाम तादृङ् निर्व्विरोधाः सन्तो व्यापारे
मनांसि निधाय निजकरैः कार्य्यं साधयत।
१३ हे भ्रातरो यूयं निराशलोका इव यथा शोकाकुला न भवथ तदर्थं
१४ महानिद्रागतलोकेषु यूयं यद् अज्ञास्तिष्ठथ नेयं मदीयेच्छा। यीशुः
प्राणान् त्यक्त्वा पुनः श्मशानाद् उदतिष्ठत् एषा कथा यद्यस्माकं विश्वसनीया
भवति तर्हि यीशुम् आश्रितान् महानिद्राप्राप्तान् लोकानपीश्वरोऽवश्यं
१५ तेन सार्द्धम् आनेष्यति। अतएव प्रभोराज्ञया युष्मभ्यम् इमां कथां कथ-
यामि प्रभोरागमनसमयेऽवशिष्टा जीवन्तः सल्लोकाः ख्रीष्टाश्रितानां महा-
१६ निद्राप्राप्तानां लोकानाम् अग्रगामिनो न भविष्यन्ति; यतो जयजयेति-
शब्देन स्वर्गीयप्रधानदूतानाम् उच्चैः शब्देनेश्वरस्य तूरीवाद्येन च सार्द्धं
प्रभौ स्वयं स्वर्गाद् अवरूढे सति प्रथमतः ख्रीष्टाश्रितानां महानिद्रा-
१७ गतानां लोकानाम् उत्थानं भविष्यति। पश्चाद् अवशिष्टा जीवन्तः सल्लो-
कास्तैः सार्द्धं मेघारूढाः सन्त आकाशे प्रभुं साक्षात् कर्त्तुं नीता भविष्यन्ति;
१८ तत्र सर्व्वदा प्रभुना सार्द्धं स्थास्यन्ति। अतोऽनया कथया परस्परम् स्वान्
सान्त्वयत।

---

### ५ पञ्चमोऽध्यायः।

१ शेषदिनार्थं सज्जीभवितुं विनयः १२ नानाप्रकारकर्म्मणां करणाज्ञा पत्र-
समाप्तेः कथा च।

१ हे भ्रातरः कालेषु विशेषसमयेषु वा युष्मान् प्रति मम लिखनम् अधिक-
२ मेव यतो निशायां चौर इव प्रभो र्दिनम् उपस्थास्यतीति यूयं स्वय-
३ मेव निश्चितं जानीथ। अस्माकं शान्ति र्निर्व्विघ्नञ्च विद्येते यस्मिन्
समये लोका एतादृशं वाक्यं वदिष्यन्ति तस्मिन् गर्भिन्याः प्रसववेद-
नेवाकस्मात् तेषां विनाश उपस्थास्यति तस्मात् कोपि रक्षां प्राप्तुं न शक्ष्यति।

किन्तु हे भ्रातरोऽन्धकारे युष्माकम् अस्थितत्वात् तद् दिनं चैार इव ४
युष्माकं समीपे नोपस्थास्यति। यूयं सर्व्वे दीप्ते र्दिवसस्य च सन्ताना ५
भवथ वयन्तु निशाया अन्धकारस्य च लोका न भवामः। अतएव ६
भिन्नलोका इव चैतन्यरहितनिद्रिता न भूत्वा जाग्रतः सन्तः सचैतन्या-
स्तिष्ठाम। ये निद्रान्ति ते निशायामेव निद्रान्ति, तथा ये मत्ता भवन्ति ७
तेपि रजन्यामेव मत्ता भवन्ति। किन्तु वयं दिवसस्य सन्तानाः सन्तः ८
प्रत्ययप्रेमकवचं वक्षसि निधाय त्राणस्य प्रत्याशाशीर्षकं शिरसि
निधाय जाग्रतस्तिष्ठाम। यत ईश्वरस्य क्रोधफलं भोक्तुम् अस्मान् अनि- ९
युज्य योऽस्माकं कृते प्राणान् अत्याक्षीत्; तेनास्माकं प्रभुना यीशुख्रीष्टेन १०
यथा परित्राता भवामः, तथा जाग्रतो वा महानिद्रागता वा भवेम तेन
सार्द्धं वसामस्तदर्थं नियुक्ता वयम्। अतएव यूयं यद्वत् कुरुथ तद्वत् परस्प- ११
रम् उपदिश्य स्वेषां सान्त्वनां निष्ठाञ्च कुरुत।

हे भ्रातरो युष्माकं मध्ये ये जना अधिपतित्वे नियुक्ताः सन्तः परि- १२
श्रमेण युष्मान् उपदिशन्ति तान् मानयध्वम्। तथा प्रेम प्रकाश्य तेषां १३
कर्म्मकारणात् तान् अतीवादृयध्वं, अपरं यूयमपि परस्परं प्रणयं कुरुध्वं
युष्मान् प्रति ममेदं निवेदनम्। हे भ्रातरो युष्मान् पुनश्च विनये यूयं १४
कुरीतिलोकान् निर्भर्त्सयध्वं, क्षुद्रमनसः प्रबोधयध्वं, दुर्ब्बलान् सबलान्
कुरुध्वं, सर्व्वान् प्रति सहिष्णवो भवत। अपरञ्च सावधाना भवत केनचिद् १५
युष्मासु हिंसितेष्वपि यूयं तं न प्रतिहिंस्त। आत्मीयान् परांश्च सर्व्वान् १६
प्रति नित्यं सौजन्यं कुरुत। सर्व्वदानन्दत। निरन्तरं प्रार्थयध्वम्। सर्व्वत्र १७ १८
धन्यवादं कुरुत यतो युष्मासु ख्रीष्टयीशुना प्रकाशितम् एतद् ईश्वराभि- १९
मतम्। पवित्रम् आत्मानं न निर्व्वापयत। प्रचारितवाक्यं नावजानीत। २०
सकलं परीक्ष्य यद् भद्रं तदेवालम्बध्वं। पापस्य छायातोपि निवृत्ता २१
भवत। तदा शान्तिदायक ईश्वरो युष्मान् सम्पूर्णत्वेन पवित्रान् करोतु २२
अपरम् अस्माकं प्रभुयीशुख्रीष्टस्यागमनसमयपर्य्यन्तं युष्माकम् आत्मानः २३
प्राणाः शरीराणि सर्व्वाणि निर्दोषत्वेन रक्षितानि भवन्तु। यो विश्वास्यो २४

२५ युष्मान् आहूतवान् स तत् करिष्यति। हे भ्रातरोऽस्माकं कृते प्रार्थयध्वं।
२६ पवित्रचुम्बनेन भ्रातृभ्यो नमस्कुरुत। यूयम् इदं पत्रं सर्व्वभ्रातृन्
२७ पाठयत, इति प्रभो र्नाम्ना युष्मान् शपयामि। अस्माकं प्रभो र्यीशुख्रीष्ट-
२८ स्यानुग्रहो युष्मान् प्रति भूयात्। इति।

---

# थिषलनीकिनः प्रति पौलस्य प्रेरितस्य द्वितीयं पत्रम्।

१ प्रथमोऽध्यायः।

१ मङ्गलाचरणं २ धर्म्माचरणं दुःखसहनार्थं तेषां प्रशंसा सान्त्वनञ्च तेषां कृते प्रार्थनाञ्च।

१ पौलः सिल्वानतिमथिनामानस्त्रयो जना अस्माकं तातमीश्वरं प्रभुं
२ यीशुख्रीष्टञ्चाश्रितं थिषलनीकीयसमाजं प्रति पत्रं लिखन्ति। अस्माकं
तात ईश्वरः प्रभु र्यीशुख्रीष्टश्च युष्मान् प्रत्यनुग्रहं शान्तिञ्च क्रियास्ताम्।
३ हे भ्रातरो युष्माकं विश्वास उत्तरोत्तरं वर्द्धते, एकैकजनं प्रति
युष्माकं प्रेमवृद्धि र्भवति च, तत्कारणाद् युष्माकं कृते सर्व्वदा यथायोग्यम्
४ ईश्वरस्य धन्यवादोऽस्माकं कर्त्तव्यः। अपरं युष्माकम् सर्व्वताडनाया दुःखस्य
च भोगेपि तादृशं धैर्य्यं विश्वासञ्च विलोक्यायेश्वरस्य समाजगणस्य
५ मध्ये युष्माकं प्रशंसां कुर्म्मः। किन्त्वीश्वरस्य यद् राज्यनिमित्तं यूयम् एतं
दुःखभोगं कुरुथ तस्य राज्यस्य योग्यपात्रत्वेन गणिता भवथ, इतीश्व-
६ रस्य यथार्थविचारस्यैकं प्रत्यक्षलक्षणम्। अपरञ्च यस्मिन् समय ईश्व-
रोऽनभिज्ञान् अस्माकं प्रभो र्यीशुख्रीष्टस्य सुसंवादस्याज्ञालङ्घकांश्च
७ समुचितं दण्डयितुं प्रभु र्यीशुः स्वपराक्रमिभि र्दूतैः सार्द्धम् अग्निशिखया
८ स्वर्गात् प्रकाशितो भविष्यति; तदास्माभिः सह क्लिष्टेभ्यो युष्मभ्यं विश्राम-
दानं युष्माकं क्लेशदायकजनेभ्यो यथायोग्यदण्डदानञ्चेश्वरस्य न्याय्यं कर्म्म
९ भविष्यति; वस्तुतस्तु यदा स स्वीयपवित्रलोकैः समादृतो भविष्यति तथास्माकं

प्रमाणे विश्वासिभि र्युष्माभिः सर्व्वैर्विश्वासिभिर्लोकैश्च मान्यो भविष्यति
तदा तस्य सम्मुखात् तस्य तेजोमयपराक्रमाच्च तेषामनन्तयातनारूपो दण्डो १०
भविष्यति। अस्माकम् ईश्वरस्य प्रभो र्यीशुख्रीष्टस्यानुग्रहानुसारतो यथा ११
युष्माभिरस्माकं प्रभो र्यीशुख्रीष्टस्य नाम गौरवान्वितं भवति, यथा च यूयं
तेन गौरवान्विता भवथ, तदर्थम् अस्माकम् ईश्वरो युष्मान् एतस्याह्वानस्य
योग्यपात्राणि गणयतु; अपरं युष्माकं मध्ये निजानुग्रहस्य सर्व्वान् सदभि- १२
प्रायान् विश्वासस्य कर्म्माणि च शक्त्या सम्पूर्णानि करोतु, वयं तस्य समीपे
सर्व्वदा युष्मदर्थं प्रार्थनामेतां कुर्म्मः।

---

२ द्वितीयोऽध्यायः।

१ स्थिरत्वे पौलस्य विनयः पापपुरुषस्य निर्णयः १३ तेषां मनोनीतत्वार्थम् ईश्वरस्य धन्यवादः १५ तेषां कृते प्रार्थना च।

हे भ्रातरोऽस्माकं प्रभो र्यीशुख्रीष्टस्यागमने तस्य समीपेऽस्माकं संग्र- १
हणे च युष्मान् इति निवेदयामः ख्रीष्टस्यागमनदिनम् अतीवसमीपवर्त्ति
जातम् एषा कथा यदि केनचिद् आत्मना वा वाक्येन वास्माभि २
र्लिखितपत्रवत् केनचित् पत्रेण वा व्यक्तीभवति तेनाकस्मात् चञ्चलमनस
उद्विग्नाश्च न भवत। केनापि प्रकारेण कोपि युष्माकं भ्रान्तिं न जनयेत् तस्य ३
दिनस्य पूर्व्वं धर्म्मलोप उपस्थास्यति, अपरं यो जनो विपक्षतां कुर्व्वन् ईश्वरात् ४
सर्व्वस्मात् पूजनीयवस्तुनश्च स्वं श्रेष्ठं कल्पयति, ईश्वरवत् ईश्वरस्य मन्दिरे
समुपविश्य स्वम् ईश्वरमिव दर्शयति, तादृशः पापपुरुषः, अर्थान् नाशस्य पात्रं
स सप्रकाशः सन् उपस्थास्यति। युष्माकं सन्निधौ स्थितिसमये यामेतां ५
कथाम् अकथयं तत् किं युष्माभि र्न स्मर्य्यते? निजसमये पापपुरुषस्य प्रका- ६
शिष्यमाणस्य निवारणार्थम् इदानीं को विद्यते तद् यूय जानीथ। एतर्हि ७
अपराधस्य निगूढं कर्म्म गुप्तं सफलं भवति किन्तु वर्त्तमानो बाधको यावद्
दूरीकृतो न भविष्यति तावद् बाधकः स्थास्यति। पश्चात् स पापपुरुषः प्रका- ८
शिष्यते तं' प्रभुः स्वमुखस्य निश्वासेन नाशयिष्यति निजागमनस्य तेजसा
च हनिष्यति। सर्व्वैः पराक्रमैराश्चर्य्यक्रियाभि र्मिथ्यालक्षणैरपराधस्य ९

सर्व्वकापथ्यैः शैतानः शक्त्यनुसारतो नाशपात्राणां मध्ये तस्य पापपुरुषस्या-
१० गमनं भविष्यति यतस्ते निजपरित्राणार्थं सत्यतायां प्रेम न कुर्व्वन्ति
११ एतस्माद् ईश्वरस्तान् मृषावाक्ये विश्वासयितुं भ्रान्तिजनिकां मायां
१२ प्रेषयिष्यति। तस्मात् ते सर्व्वे सत्यकथायां विश्वासम् अकृत्वा अधर्म्मे सन्तुष्ट-
त्वाद् दण्डभाजनानि भविष्यन्ति।

१३ हे प्रभोः प्रियभ्रातरः, युष्माकं कृतेऽस्माकं सर्व्वदेश्वरस्य धन्यवादः
करणीयः, यत ईश्वर आ प्रथमाद् आत्मनः पवित्रतया सत्यकथाया
१४ विश्वासेन च परित्राणार्थं युष्मान् मनोनीतान् कृत्वास्माकं प्रभो
र्यीशुख्रीष्टस्यैश्वर्य्यप्राप्त्यर्थम् अस्माभिः प्रचारितेन सुसंवादेन युष्मान्
आहूतवान्।

१५ हे भ्रातरो यूयम् अस्माकं कथाभिः पत्रेण वा यान् सर्व्वान् उपदेशान्
१६ अशिक्षध्वं तत्रैव मनो निवेश्य सुस्थिरा भवत। अपरम् अस्माकं प्रभु
र्यीशुख्रीष्टः स्वयं तथा यः प्रेम कृत्वास्मभ्य नित्यं शान्तिम् अनुग्रहेण
१७ उत्तमप्रत्याशाञ्च ददाति सोऽस्माकं तात ईश्वरो युष्माकं मनःसु शान्तिं
विधाय सर्व्वस्मिन् सद्वाक्ये सत्कर्म्मणि च युष्मान् स्थिरान् कुर्य्याताम्।

---

३ तृतीयोऽध्यायः।

१ स्वस्य कृते प्रार्थयितुं तान् प्रति पौलस्य विनयः ६ अनाज्ञाग्राहिणोऽलसांश्च
प्रति तस्योपदेशः पत्रसमाप्तेः कथा च।

१ हे भ्रातरः शेषे वदामि, ईश्वरस्य वाक्यं युष्माकं मध्ये यथा चलति
२ तथैव यत् सर्व्वत्र चलितं मान्यञ्च भवेत्; यच्च वयम् अविवेचकानां
दुष्टानाञ्च लोकानाम् अधीनताया रक्षिता भवेम तद् अस्माकं कृते
३ प्रार्थयध्वं यतः सर्व्वेषां विश्वासो नास्ति। किन्तु यः प्रभु र्युष्मान्
४ स्थिरीकृत्याशुभात् रक्षिष्यति स एव विश्वास्यः। अस्माकं याः सर्व्वा आज्ञा
युष्माभिरलभ्यन्त तदनुसारतः कर्म्म कुरुथ करिष्यथ च, युष्मासु वयं
५ प्रभुनेदृशं विश्वासं कुर्म्मः। ईश्वरे प्रेम कर्त्तुं ख्रीष्ट इव धैर्य्यं कर्त्तुञ्च प्रभु
र्युष्माकं मतिं स्थापयेत।

हे भ्रातरो वयं स्वेषां प्रभो र्यीशुख्रीष्टस्य नाम्ना युष्मान् यादृ- ६
शम् आज्ञापयाम तदनुसारतो युष्माकं यो यो भ्राता नाचरन्
तद्विपरीतं कर्म्म करोति तेषाम् एकैकस्मात् पृथग् भवत। यतो येन ७
प्रकारेणास्माकम् अनुकारित्वं युष्माकम् उचितं तद् यूयं जानीथ।
अपरञ्च वयं युष्माकं मध्ये किञ्चन कुत्सितं न व्यवाहराम, तथा विना मूल्यं ८
कस्याप्यन्नं नाभुञ्ज्महि वरञ्च युष्माकं कस्मिन्नपि कमपि भारं न
न्यसितुं श्रमेण क्लेशेन च दिवानिशं कार्य्यम् अकुर्म्म। अत्रास्माकं ९
कोऽप्यधिकारो नास्ति, इत्थं नहि किन्तु यूयं यद् अस्माकम् अनुकारिणो
भवथ, तदर्थं युष्माकं समीपे स्वान् दृष्टान्तस्वरूपान् कृत्वा स्थापितवन्तः।
युष्माकं सन्निधौ स्थितिसमये वयं युष्मान् एताम् आज्ञाम् अकुर्म्म, यदि १०
कश्चित् कार्य्यं न चिकीर्षति स न भुङ्क्ताम्। किन्तु युष्माकं मध्ये कश्चित् ११
कश्चित् कुव्यापारं करोतीति श्रुतमस्माभिः। शान्तभावेन कार्य्यं कर्त्तुं स्वेषां १२
खाद्यद्रव्यं भोक्तुञ्च तादृशान् लोकान् अस्माकं प्रभो र्यीशुख्रीष्टस्य नाम्ना
विनयं कृत्वा एतद् आज्ञापयामः। हे भ्रातरः सत्कर्म्म कर्त्तुं क्लान्ता न भवत। १३
यदि कश्चिद् अनेन पत्रेणास्माकं कथाया वशं गतो न भवति तर्हि १४
यूयं तं मानुषं परिचिनुत तथा तं लज्जयितुं तेन सार्द्धम् व्यापारं
मा कुरुत। इत्यनेन यत् तं शत्रुत्वेन ज्ञास्यथ तन्न किन्तु तं भ्रातृभावेन १५
चेतयत। अस्माकं शान्तिदाता यः प्रभुः स सर्व्वदा सर्व्वथा युष्मभ्यं शान्तिं १६
प्रदेयात्। प्रभु र्युष्माकं सर्व्वेषां सङ्गीभूयात्। इति।

एकैकस्मिन् पत्रे यादृशं हस्ताक्षरस्य चिह्नं विधाय लिखामि पौलो- १७
ऽहम् एतस्मिन् पत्रे तेन हस्ताक्षरेण युष्मान् नमस्कारं ज्ञापयामि। युष्माकं १८
सर्व्वान् प्रत्यस्माकं प्रभो र्यीशुख्रीष्टस्यानुग्रहो भूयात्। इति।

# तिमथिं प्रति पौलस्य प्रेरितस्य प्रथमं पत्रम्।



## १ प्रथमोऽध्यायः।

१ मङ्गलाचरणं ५ मण्डलीव्यवस्थासुसंवादप्रेरितत्वपदेषु तिमथिं प्रति पौलस्योपदेशः १८ स्थिरं स्थातुं विनयः कतिपयलोकानां धर्म्मत्यागप्रकाशनञ्च।

१ अस्माकं प्रत्याशाजनकस्य प्रभो र्यीशुख्रीष्टस्य त्राणकर्त्तुरीश्वरस्य
चाज्ञानुसारतो यीशुख्रीष्टस्य प्रेरितः पौलः स्वप्रियधर्म्मपुत्राय तिमथये
२ पत्रं लिखति। अस्माकं तात ईश्वरोऽस्माकं प्रभु र्यीशुख्रीष्टश्च त्वाम्
प्रत्यनुग्रहं दयां शान्तिञ्च कुर्य्यात्।
३ प्रत्ययाधीनाया ईश्वरनिष्ठाया अवर्द्धके विवादस्य वर्द्धके चेतिहासे
बहुप्रकारवंशावल्याञ्च मतिं न निदधातुम् अन्यं नवीनं कञ्चनोपदेशं न
४ कर्त्तुञ्च यथा कतिपयलोकान् इत्याज्ञापयसि तदर्थम् अहं माकिदनिया-
५ देशं प्रति यात्राकाल इफिषनगरे स्थातुं त्वां विनीतवान्। वस्तुतस्तु
निर्म्मलान्तःकरणाद् उत्तममानसाद् अकल्पितविश्वासाच्च यत् प्रेम तद्
६ आज्ञायाः फलं; किन्तु कतिपयलोका एतत्पराङ्मुखा भूत्वा निरर्थके
७ पुरावृत्ते मनो न्यदधुः; अपरं स्वयं यां कथां वदन्ति तत् कथाया वा
कोऽभिप्राय इति न विदित्वापि व्यवस्थाया उपदेशका भवितुम् इच्छन्ति।
८ किन्तु सा व्यवस्था यदि योग्यत्वेन मान्या भवति तर्हि फलदायिका
९ भवति तद् वयं जानीमः। अपरञ्च सा व्यवस्था कस्यापि धार्म्मिकस्य
विरुद्धा न भूत्वा, अधार्म्मिकोऽवाध्यो दुराचारी पापी अपवित्रोऽशुचिः
पितृहन्ता मातृहन्ता मनुष्यहन्ता वेश्यागामी पुंमैथुनी मनुष्यचोरो
१० मिथ्यावादी मिथ्याशपथकारी च सर्व्वेषाम् एतेषां विरुद्धा तथा मयि
समर्पितस्य सच्चिदानन्देश्वरस्य तेजोमयसुसंवादस्यानुयायिहितोपदेशस्य
११ विपरीता या काचित् कथा भवति तद्विरुद्धा सा व्यवस्था समुपस्थिता
१२ विद्यते, इत्यहं जानामि। यो मां विश्वसनीयं विज्ञाय सेवनपदे नियुक्तवान्

एतादृशो योऽस्माकं बलप्रदाता प्रभु र्यीशुख्रीष्टः, तस्यैव धन्यवादं करोमि।
पूर्व्वम् अहमपि पाषण्डो विपक्षो हिंसकश्चासं किन्तु ज्ञानहीनताकारणाद् १३
अविश्वासेन तत् कर्म्म कृतवान् इतिहेतोः कृपाभाजनम् अभवम्। अपरं ख्रीष्टे १४
यीशौ विश्वासः प्रेमजनकोऽस्माकं प्रभोरनुग्रहो मां प्रति प्रचुरतरो जातः।
अपरञ्च येषां मध्येऽहं मुख्य एतादृशानां पापिलोकानां परित्राणार्थं १५
ख्रीष्टो यीशु र्जगति समवतीर्णोऽभवत्, एषा कथा विश्वसनीया सर्व्वैषां
ग्रहणीया च। अपरं ये जना अनन्तपरमायुः प्राप्तुं ख्रीष्टे विश्वसन्ति तान् १६
प्रति दृष्टान्तो भवितुम् मयि यथा यीशुख्रीष्टस्य चिरसहिष्णुता प्रथमं
प्रकाश्यते तदर्थं प्राप्तानुकम्पोऽभवम्। अनादिरक्षयोऽदृश्यो राजा योऽ- १७
द्वितीयः सर्व्वज्ञ ईश्वरः, तस्य गौरवं महिमा च सर्व्वदा प्रकाश्यिषीष्ट। इति।

हे पुत्र तिमथे त्वं धर्म्मम् उत्तममानसञ्च रक्षित्वा यद् उत्तमयुद्धं १८
करोषि तदर्थं त्वयि पूर्व्वोक्तं यद् भविष्यद्वाक्यं तदनुसारतोऽहम् आज्ञा-
पयामि। तत्सर्व्वैषां परित्यागात् कस्यचिद् विश्वासतरी भग्नाभवत् तेषां १९
मध्ये हुमिनेयसिकन्दरौ विद्येते। किन्तु तौ द्वौ जनौ यत् पाषण्डतां न २०
कर्त्तुं शिक्षेते तदाशयेनाहं तौ शैताने हस्ते समार्पयम्।

---

२ द्वितीयोऽध्यायः।

१ सर्व्वसाधारणलोकानां कृते प्रार्थयितुं पैालस्य निदेशः ९ योषिताम् अलङ्कारस्या-
नुपदेशस्य च कथनम्।

वयं यथा शान्तत्वेन निर्व्विरोधत्वेन च तिष्ठन्तः सर्व्वस्मिन् धर्म्मे सदा- १
चारे च कालं यापयामः, तदर्थं सर्व्वसाधारणलोकानां कृते विशेषतो
राज्ञः शासकानाञ्च कृते, ईश्वरस्य सन्निधौ विनयनिवेदनप्रार्थनाधन्य- २
वादाः कर्त्तव्या भवन्तीति मदीयः प्रथमोपदेशः। अदः कर्म्मास्माकीनत्रा- ३
तुरीश्वरस्य साक्षाद् उत्तमं ग्राह्यञ्च जायते यतः सर्व्वे मानवै स्त्राणं सत्य- ४
वाक्यज्ञानञ्च लभ्येते तदीयेच्छेयम्। अद्वितीय एक ईश्वरो विद्यते तथा ५
तस्य मानुषाणाञ्च मध्येऽद्वितीय एको मध्यस्थो यः पुरुषः ख्रीष्टयीशुः स ६
सर्व्वैषां मुक्ते र्मूल्याय स्वीयप्राणान् दत्तवान्। अपरं योग्यकाले तदेव ७

प्रमाणयितुम् अहं प्रचारकः प्रेरितश्च सन् विश्वासे सत्यवाक्ये भिन्नदेशि-
नाम् उपदेशकपदे च न्ययुज्ये, इत्यत्र मदीयमेकं वाक्यमपि वितथं
८ नहि ख्रीष्टेन सर्व्वं तथ्यं कथयामि। मानुषाः पवित्रकरान् उत्तोल्य
निष्क्रोधं निर्व्विरोधञ्च सर्व्वत्र प्रार्थयन्तां ममेयम् आज्ञा।
९ अपरञ्च नार्य्यः केशसंस्कारैः कणकमुक्ताद्याभरणै र्महाधनवस्त्रैश्च स्वा
१० मण्डिता न कुर्व्वत्य ईश्वरसेविका योषितइव योग्यवस्त्राणि परिधाय लज्जा-
११ शालिसत्कर्म्मरूपै र्भूषणै र्भूषिता भवन्तु ममायमादेशः। नारी पुरुषस्य
१२ वश्या सती तुष्णीम्भूय शिक्षेत यतः पुरुषं शिक्षयितुं पुरुषस्याधिपतित्वं
वा कर्त्तुम् अहं नारीं नानुमन्ये किन्तु तुष्णीं स्थातुम् आदिशामि।
१३ यतो हवायाः पूर्व्वम् आदम् प्रथमम् असृज्यत तथा स भ्रमयुक्तो नासीत्
१४ योषा भ्रान्तियुक्ता सती सापराधा बभूव। तथापि नारीगणो यदि विश्वासे
२५ प्रेम्नि पवित्रतायां सत्यवाक्ये च स्थिरस्तिष्ठति तर्हि ख्रीष्टसन्तानप्रसवात्
परित्रायिष्यते।

---

३ तृतीयोऽध्यायः।

१ धर्म्माधिपतीनां व्यवहारनिर्णयः ८ सहकारिणां व्यवहारनिर्णयः १४ तिमथिं प्रति
लिखितुं पौलस्याभिप्रायः।

१ यदि कश्चिद् धर्म्माधिपतित्वपदम् आकाङ्क्षते तर्हि स सत् कर्म्म चिकी-
२ र्षतीति कथैषा सत्या भवति किन्तु धर्म्माधिपतौ सति पानदोषः प्रहारः
३ कुत्सितलोभ एतत्सर्व्ववर्जितस्य निर्द्दोषत्वं केवलैकस्त्रीस्वामित्वं चैतन्यं
सतर्कत्वं शुद्धाचारित्वम् आतिथ्याचरणं शिक्षणे निपुणत्वं मृदुत्वं निर्व्वि-
४ रोधित्वं निर्लोभत्वञ्च तथा विज्ञत्वेन निजबालकान् वशीकृत्य परिजनानां
५ शासनञ्चैतेषु गुणेषु तस्य प्रयोजनम् अस्ति। यतो यः कश्चन निजपरिवारान्
शासितुम् असमर्थः स कथम् ईश्वरस्य समाजस्य वीक्षणं कर्त्तुं शक्नोति?
६ अपरञ्च सोऽभिमानेन प्रफुल्लः सन् शैतानो दण्डयोग्यो यन्न जायते तत्कार-
७ णात् नवीनः शिष्यो धर्म्माधिपति र्न भवेत्। अपरञ्च निन्दितः सन् शैतानो
जाले यथा न पतति तत्कृते वहिर्भूतलोकेभ्यस्तेन सुख्यातिरवश्यप्राप्तव्या।

प्रवीणत्वं वाक्यद्वयराहित्यं पानदोषवर्जितत्वं धने निर्लोभत्वं निर्म्मल- ८
मनसा धर्म्मस्य निगूढतत्त्वधारित्वञ्च सहकारिणाम् अवश्यकर्त्तव्यं। अपरं ते ९
जनाः प्रथमतः परीक्षिताः सन्तो निर्दोषा भूत्वा सहकारित्वपदे नियुक्ता १०
भवन्तु। अपरञ्च तेषां योषितस्तादृश्यः प्रवीणा अनपवादिकाः सतर्काः ११
सर्व्वत्र विश्वास्याश्च भवन्तु। तथा सहकारिणः केवलम् एकैकयोषितः १२
स्वामिनो भूत्वा स्वीयस्वीयसन्तानप्रभृतीनां परिजनानां यथायोग्यं शासनं
कुर्व्वन्तु। यतो ये सहकारित्वपदस्य कर्म्म निष्छिद्रं साधयन्ति ते ख्रीष्ट- १३
यीशौ धर्म्मे बहूत्साहं प्रधानपदञ्च प्राप्नुवन्ति।

अहं शीघ्रं तव समीपे समुपस्थास्यामि ममेदृशी प्रत्याशा विद्यते। किन्तु १४
यदि तत्र विलम्बत्वं जायते तर्हि सत्यवाक्यस्य स्तम्भभित्तिमूलयुक्त ईश्वरस्य १५
गृहे, अर्थाद् अमरेश्वरस्य समाजे कीदृश आचारः कर्त्तव्यस्तद् यथा
त्वं जानासि तदर्थं लिखामि। अपरम् ईश्वरो मानुषिके देहे प्रकाशवान् १६
आत्मना पुण्यवत्त्वेन गणितो दूतैः प्रत्यक्षीकृतो देशे देशान्तरे च
प्रचारितो जगतो विश्वासपात्रीभूय स्वर्गाय नीतोऽभवद् इति धर्म्मस्य
निगूढं वाक्यम् अत्र विचिकित्सा न विद्यते।

---

४ चतुर्थोऽध्यायः।

१ धर्म्मत्यागस्य भविष्यद्वाक्यं ७ धर्म्मे तिमथिं प्रति पौलस्य नानाप्रकार उपदेशश्च।

पवित्र आत्मा स्पष्टम् इदं वाक्यं वदति चरमकालेषु कतिपयलोका १
वह्निचिह्नयुक्तत्वात् कठोरमनसां मृषाभाषिणां कापट्येन भ्रमजनका- २
त्मना भूतानां शिक्षया च शिक्षिताः सन्तो धर्म्माद् भ्रष्टा भविष्यन्ति।
ते मृषाभाषिणो विवाहं निषेत्स्यन्ति, अपरम् मनुजानां भोजनार्थम् ३
ईश्वरेण यानि वस्तूनि सृष्टानि यानि विश्वासिभिः सत्यवेत्तृभिश्च
धन्यवादैः र्ग्रहीतव्यानि च तानि निषेत्स्यन्ति किन्त्वीश्वरस्य धन्यवादेन ४
गृहीतम् ईश्वरस्य किमपि वस्तु नाग्राह्यं भवति सर्व्वमेवोत्तमं यत ५
ईश्वरस्य वाक्येन प्रार्थनया च पवित्रीभवति। अतएव भ्रातृगणं प्रति ६